होती है। शेष 'इर' रहता है। चित् करने का प्रयोजन अन्तोदात्त स्वर है तथा कित् करने का प्रयोजन गुणनिषेध है।

**स्वा०द०वृ०**—इष्यादि[ भ्यः ]षोडशधातुभ्यः किरच्। इच्छन्तीष्टं साध्नुवन्त्यनेनेति **इषिरः** अग्निः वा। माद्यति मत्तो भवति यया सा **मदिरा** सुरा मद्यम् [ वा ]। मोदतेऽसौ **मुदिरः** कामुको वा। मोदन्तेऽनेनेति **मुदिरो** मेघः [ वा ]। खिद्यति येन सः **खिदिरः** चन्द्रमा वा। छिनत्ति येन स **छिदिरः** असिः कुठारो वा। भिनत्ति येनेति **भिदिरं** वज्रम् [ वा ]। मन्दन्ते स्तुवन्ति स्वपन्ति वा यस्मिंस्तद् **मन्दिरं** गृहं नगरं वा। चन्दन्त्याह्लादयन्ति येन स **चन्दिरः** चन्द्रमा हस्ती वा। तेमत्यार्द्रीभवत्यस्मिन् तत् **तिमिरम्** नेत्ररोगो वा। यो मेहयति सेचयति पृथिवीं मेघजलेन स **मिहिरः** सूर्य्यो वा। मुह्यति यस्मै यो वा मुह्यति स **मुहिरः** काम्यः पदार्थोऽसभ्यो जनो वा। यो मुञ्चति स्वपदार्थमन्येभ्यो ददाति स **मुचिरः** दानशीलो वा। यद्रोचते प्रीतिकरं भवति तद् **रुचिरं** शोभनम्। [ वाच्यलिङ्गत्वाद् ] रुचिरं वस्त्रम्, रुचिरः पुत्रः, रुचिरा कन्या वा। रुध्यते चर्म्मणा यत्तत् **रुधिरं** शोणितम् [ वा ]। बध्यते शब्दश्रवणान्निरुध्यते स **बधिरः** श्रोत्रविकलः [ वा ]। किलच्प्रत्ययस्य कित्त्वात् **अनिदिताम्०** [ 6.4.24 ] इति नलोपः। शुष्यन्ति पदार्था येन तत् **शुषिरं** छिद्रमाकाशो वा।

**उदा०**—(1) इषिरः (= अग्नि, आहार)—इच्छन्तीष्टं साध्नुवन्त्यनेन। इष्णाति इष्यते वा। इषु इच्छायाम् अथवा इष आभीक्ष्ण्ये अथवा इष गतौ से किरच्। इष् किरच्—अनुबन्धलोप—इष् इर—'पुगन्तलघूपधस्य च' से प्राप्त गुण का निषेध।

(2) मदिरा (= सुरा, खञ्जन पक्षी, दुर्गा का नाम)—माद्यति मत्तो भवति यया सा। माद्यन्ते जना अनया। मदयति या सा। मदी हर्षे अथवा मदि ण्यन्त से किरच्। मद् इर—'स्त्रियाम्' के अधिकार में 'अजाद्यतष्टाप्' से टाप्, अनुबन्धलोप—मदिर आ—सवर्णदीर्घ, सु।

(3) मुदिरः (= मेघ, कामुक, प्रेमी, मेंढक)—मोदतेऽसौ। मोदन्तेऽनेन। मुद हर्षे धातु से किरच्। लघूपध गुण का निषेध। मुद् किरच्—मुद् इर सु। 'स्त्रियाम्' के अधिकार में टाप् होकर—मुदिरा।

(4) खिदिरः (= चन्द्रमा, दरिद्र, संन्यासी)—खिद्यति येन। खिद दैन्ये धातु से किरच् प्रत्यय। खिद् किरच्—अनुबन्धलोप। 'पुगन्तलघूपधस्य च' से प्राप्त लघूपध गुण का 'क्ङिति च' से निषेध। खिदिर सु।

(5) छिदिरः (= तलवार, शब्द, रस्सी, अग्नि)—छिनति येन। छिनत्तीति। छिदिर् द्वैधीकरणे धातु से किरच्। छिद् इर—लघूपध गुण का निषेध।

(6) भिदिरम् (= वज्र)—भिनत्ति येन। भिनत्तीति। भिदिर् विदारणे धातु से किरच्। भिद् इर—लघूपध गुण का निषेध, सु।

(7) मन्दिरम् (= देवालय, नगर, गृह)—मन्दन्ते स्तुवन्ति स्वपन्ति यस्मिन् तत्। मदि स्तुत्यादौ धातु से किरच्। 'इदितो नुम् धातोः' से नुम् आगम। म न् द् इ र—सु, अतोऽम्।

(8) चन्दिरम् (= हाथी, चन्द्रमा)—चन्दन्त्या ह्लादयन्ति येन। चदि आह्लादने धातु से किरच्। 'इदितो नुम् धातोः' से नुम्—च न् द् किरच्—चन्दिर सु। लघूपध के अप्राप्त रहने से गुण की प्राप्ति न हुई।

(9) तिमिरम् (= अन्धकार, जंग-मोर्चा)--तेमत्यार्द्रीभवति यस्मिन् तत्। तिम्यति तेमयति वा। तिम क्लेदने धातु से किरच् लघूपध गुण का निषेध।

(10) मिहिरः (= सूर्य, चन्द्रमा, पवन, वृद्ध, पयोद)—मेहयति सेचयति पृथिवीं जलेन। मिह सेचने धातु से किरच्। मिह् किरच्—लघूपध गुण का निषेध, सु।

(11) मुहिरः (= कामदेव, असभ्य, मूर्ख)—मुह्यति यस्मै यः। मुह्यतीति। मुह्यतेऽनेन। मोहयतीति। मुह वैचित्त्ये धातु से किरच्। मुह् किरच्—प्राप्त लघूपध गुण का निषेध—मुहिर सु।

(12) मुचिरः (= देवता, दानशील, वायु)—मुञ्चति ददाति स्वपदार्थान्। मुच्यते जनो दुःखेभ्योऽनेन। मुच्लृ मोक्षणे धातु से किरच्। लघूपध गुण का निषेध।

(13) रुचिरम् (सुन्दर, स्वादिष्ट)—रोचते प्रीतिकरं भवति। रुच दीप्तौ से किरच्। रुच् किरच्—अनुबन्धलोप, लघूपध गुण का 'क्ङिति च' से निषेध, सु।

(14) रुधिरम् (= रक्त, जाफरान)—रुध्यते चर्मणा यत् तत्। रुधिर् आवरणे धातु से किरच्। रुध् इर–लघूपध गुण का निषेध, सु। अतोऽम्, अमि पूर्वः।

(15) बधिरः (= बहरा)—बध्यते शब्दश्रवणान् निरुध्यते। बद्धमस्य श्रवणेन्द्रियम्। बन्ध बन्धने। बन्ध् किरच्—अनुबन्धलोप, 'अनिदितां हल उपधाया०' से अनुनासिकलोप। बध् इर सु।

(16) शुषिरम्—(= छिद्र, आकाश, एक वाद्य)—शुष्यन्ति पदार्था येन। शोषयतीति। शुष शोषणे धातु से किरच्। लघूपध गुण का निषेध, सु।

**विशेष**—(क) नारायण भट्ट के अनुसार प्रकृत में 'महि' इतना पाठ अधिक है। द्रष्टव्य—तिमिमहिमुहिमिहिमुचि····किरच्। (1) महिरः—मह् किरच्—पूर्ववत्।

(ख) स्वामी दयानन्द के अनुसार 'रुधिशुषिबन्धिभ्यः किरच्'—इस प्रकार पाठ है।

## (52) अशेर्नित् [1.52]

**पद०**—अशे: 5.1, नित् 1.1।
**अनु०**—'इषि····किरच्' (उ०सू० 1.51) से 'किरच्' का अनुवर्त्तन है।
**सं०**—अश्धातो: किरच् प्रत्यय: स्यात्, स च नित्सञ्ज्ञ:।

**व्याख्या**—अश् धातु से परे किरच् प्रत्यय होता है और वह नित् होता है। यह अतिदेश सूत्र है। प्रत्यय को नित् करने का प्रयोजन आद्युदात्त स्वर है। **द्रष्टव्य**—'ञ्नित्यादिर्नित्यम्' (पा० 6.1.196)।

**स्वा०द०वृ०**—अश्नाति य: पदार्थान् स: **अशिर:** अग्नि: [वा]; धृष्टतयाऽश्नाति वा **अशिर:** दुर्जन: [वा]।

**उदा०**—(1) अशिर: (= अग्नि, दुष्ट, सूर्य)—अश्नाति सर्वान् पदार्थान् य: स:। (धृष्टतया) अश्नातीति। अश् धातु से किरच् प्रत्यय। अश् किरच्—अनुबन्ध-लोप। अश् इर—सु

**विशेष**—पेरिसूरि 'अशेर्णिच्च' पाठ मानते हैं। तब 'आशिर' शब्द जो वेद में उपलब्ध होता है, उपपन्न होता है। अश् किरच्—आश् इर—णित् होने से 'अत उपधाया:' से उपधा वृद्धि। वेद में मध्योदात्त स्वर प्राप्त होता है। जिसकी साधुता बहुलवचन ग्रहण से की जा सकती है।

## (53) अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरा: [1.53]

**पद०**—अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरा: 1.3
**अनु०**—'इषि····किरच्' (उ०सू० 1.51) से 'किरच्' का अनुवर्त्तन है।
**सं०**—अजिरादय: सूत्रोक्ता: सप्त शब्दा: किरच्प्रत्ययान्ता निपात्यन्ते।

**व्याख्या**—प्रकृत से निपातन किया जा रहा है। किरच् प्रत्यय का प्रकरण चल रहा है। अत: अजिर आदि शब्दों में किरच् प्रत्यय का निपातन जानना चाहिए। **अर्थ**—अजिर, शिशिर, शिथिल, स्थिर, स्फिर, स्थविर और खदिर—ये सात शब्द किरच् प्रत्ययान्त निपातित हैं।

**स्वा०द०वृ०**—अजिरादय: सप्त किरच्प्रत्ययान्ता निपात्यन्ते। अजन्ति गच्छन्ति यत्र तत् **अजिरम्** अङ्गनं गृहाग्रभाग: 'आंगन' इति प्रसिद्धम् [वा] [निपातनादजेर्वीभावाभाव:।] शशति दिनाल्पत्वाच्छीघ्रं गच्छति तत् **शिशिरम्** ऋतुर्हिमं शीतलं वस्तु वा। [धातोरुपधाया इत्त्वं निपात्यते।] श्रथति विमुञ्चति पुरुषार्थमिति **शिथिल:** पुरुष:, शिथिला कन्या, **शिथिलानि** तृणानि मृदूनीत्यर्थ:। धातोरुपधाया इत्त्वं

रेफस्य लोप: प्रत्ययस्थस्य रेफस्य लत्वं च निपात्यते। गमनागमननिवृत्त्या तिष्ठतीति **स्थिरं** निश्चलम्। धातोराकारलोप:। स्फायते प्रवर्द्धते [य:] स स्फिर: प्रभूतं वा। आय्भागस्य लोपो[ऽत्र] निपातनम्। गमनेऽसमर्थत्वात् तिष्ठतीति **स्थविर:** वृद्धो भिक्षुको वा। धातोर्वुक् ह्रस्वत्वञ्च। खदति हिनस्तीति **खदिर:** वृक्षभेदो वा।

**बाहुलकात्**—य: शेते स शिविर:; शेरते यस्मिन् तत् **शिविरं** स्थानं वा। 'शीङ्' धातोर्वुक् ह्रस्वत्वञ्च।

**उदा०**—(1) अजिरम् (= आँगन, शरीर, पवन, मेंढक)—अजन्ति गच्छन्ति यत्र तत्। अज गतिक्षेपणयो: से किरच्। अज् किरच्—'अजेर्व्यघञपो:' (पा० 2.4.55) से अज् के स्थान पर 'वी' आदेश प्राप्त, निपातन से निषेध, सु। दशपाद्युणादिवृत्ति में नञ्पूर्वक जॄ धातु से 'अजिर' शब्द सिद्ध किया है। नञ् जॄ किरच्—अनुबन्धलोप—न जॄ इर—'नलोपो नञ:' से न् का लोप, ॠकार का निपातन से लोप—अ ज् इ र सु। जॄ वयोहानौ। न जीर्यते इति अजिरा: (देवा:)।

(2) शिशिरम् (= एक ऋतु)—शशति दिनस्याऽल्पत्वात् शीघ्रं गच्छति तत्। शश् किरच्—शश् इर—धातु की उपधा को निपातनात् इत्त्व। किश् इर सु। दशपाद्युणादि वृत्ति में—शॄ (हिंसायाम्) किरच्। शीर्यन्तेऽस्मिन् तृणगुल्मवनस्पतीनां तेजांसि। निपातन से धातु को द्वित्व। शॄ शॄ इर—निपातन से सन्वद्भाव, उरत्, उरण् रपर:, हलादि: शेष:, सन्यत:। शर् शॄ इर—श शॄ इर—शि शॄ इर—ॠलोप निपातन से। शिश् इर सु।

(3) शिथिल: (= परित्यक्त, ढीला)—श्रथति विमुञ्चति पुरुषार्थम्। श्रथि शैथिल्ये से किरच्। श्रथ् इर धातु के रेफ का लोप, अनुस्वार, लोप, उपधा को इत्त्व निपातन से–शिथ् इर—प्रत्ययस्थ रेफ को लत्व, सु।

महर्षि दयानन्द ने श्रथ विमोचने धातु से 'शिथिल' शब्द की निष्पत्ति मानी है, परन्तु हमारे मत में श्रथि शैथिल्ये से यह शब्द निष्पन्न होता है। दशपाद्युणादिकार का भी यही मत है।

(4) स्थिर: (= निश्चल)—(गमनाऽगमननिवृत्त्या) तिष्ठतीति। ष्ठा गतिनिवृत्तौ से किरच्। धात्वादे: ष: स, निमित्ताऽपाये नैमित्तिकस्याऽप्यपाय:—स्था इर—निपातन से आकारलोप—स्थ् इर सु।

(5) स्फिर: (= अत्यधिक,बढ़ा हुआ)—स्फायते प्रवर्द्धते य: स:। स्फायी वृद्धौ से किरच्। स्फाय् इर—आय् भाग का निपातन से लोप—स्फ् इर सु।

(6) स्थविर: (= वृद्ध, भिक्षुक)—तिष्ठतीति। ष्ठा से किरच्। निपातन से ह्रस्व

आदेश—स्था किरच्—स्था इर—स्थ इर—निपातन से वुक् आगम, 'आद्यन्तौ टकितौ' से अन्ताऽवयव—स्थव् इर सु ।

(7) खदिरः (= खैर का वृक्ष)—खदति हिनस्ति । 'खद स्थैर्ये हिंसायां च' से किरच् । खद् इर सु । महर्षि दयानन्द ने खद धातु से खदिर शब्द सिद्ध किया है, परन्तु इस दशा में कोई निपातन कार्य दृष्टिगोचर नहीं होता है । दशपाद्युणादि वृत्तिकार ने खादृ भक्षणे धातु से इस शब्द की निष्पत्ति दर्शाई है । यथा—खादन्ति यं कुष्ठव्याधिशान्त्यर्थं सः । खाद् किरच्—निपातन से धातु की उपधा को ह्रस्व आदेश—खद् इर् सु ।

(8) शिविरम् (= स्थान, कैम्प)—बहुलवचनात् सूत्रोक्त से अतिरिक्त शब्दों का भी निपातन प्राप्त होता है । शेरतेऽस्मिन् बलानि । शीङ् स्वप्ने से किरच् । शी किरच्—धातु को ह्रस्व आदेश निपातन से—शि इर—वुक् आगम निपातन से—शिव् इर सु ।

(9) पिठिरम् (= साधनभाण्ड)—पिठ् किरच्—पिठ् इर सु—अतोऽम् ।

पिठरम्—किरच् प्रत्यय के आदि अच् (इकार) को बाहुलकात् अत् आदेश होकर 'पिठर' शब्द निष्पन्न होता है ।

**विशेष**—श्वेतवनवासी प्रकृत में 'शिविर' का अधिक पाठ स्वीकार करते हैं । द्रष्टव्य—शिथिलशिविरस्थिर० । नारायण भट्ट 'शिथिल' के स्थान पर 'शिथिर' पाठ मानते हैं ।

## (54) सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकि-भूभ्य इलच् [1.54]

**पद०**—सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्यः 5.3, इलच् 1.1

**सं०**—सल् कल् अन् मह् भड् भण्ड् शण्ड् पिण्ड् तुण्ड् कुक् भू—इत्येतेभ्यो धातुभ्य इलच् प्रत्ययः स्यात् ।

**व्याख्या**—'सलि⋯भूभ्यः' यह पञ्चम्यन्त पद है । सल्, कल्, अन्, मह्, भड्, भण्ड्, शण्ड्, पिंण्ड्, तुण्ड्, कुक् और भू—इन धातुओं से परे इलच् प्रत्यय होता है । च् अनुबन्ध 'चितः' (पा० 6.1.159) से अन्तोदात्त स्वर के लिए है ।

**स्वा०द०वृ०**—सल्यादिभ्य इलच् । सलति गच्छतीति **सलिलं** जलं वा । कलति सङ्ख्याति तत् **कलिलं** मिश्रं दुःखेन साध्यं गहनमिति वा । अनिति जीवति जीवयति वा स **अनिलः** वायुर्वा । यो महयति यं महयन्ति येन वा मह्यते पूज्यते स **महिलः** पुमान्, महिलं स्थानम्, **महिला** स्त्री वा । बाहुलकाद् इलच इकारस्यैकारे सति **महेला** स्त्री इत्यपि सिद्धं भवति । 'भड' इति सौत्रो धातुः । भडति हिनस्तीति **भडिलः** शूरो वा । भडति परिचरति स्वामिनमिति **भडिलः** सेवकः । भण्डयति परिहसति येन स

**भण्डिलः** कल्याणं वा। शण्डति रोगयुक्तो भवतीति **शण्डिलः** ऋषिविशेषो वा, यस्य गोत्रापत्यं 'शाण्डिल्यः' इति प्रसिद्धम्। पिण्डति सङ्घातं करोति स **पिण्डिलः** गणको वा। तुण्डति तोडति पृथक् करोति स **तुण्डिलः** उच्चनाभिर्जनो वा। कोकत आदत्तेऽसौ **कोकिलः** पक्षिविशेषो वा। यो भवति स **भविलः** भवितुं योग्यो वा।

**बाहुलकात्**—कुटति कौटिल्यं करोति स **कुटिलः** क्रूरकर्मा वा।

**उदा०**—(1) सलिलम् (= जल)—सलति गच्छति। षल गतौ से इलच्। 'धात्वादेः षः सः' से षकार को सकार—सल् इलच्—सल् इल सु।

(2) कलिलम् (= गहन, महान् राशि)—कलति सङ्ख्याति तत्। कल सङ्ख्याने से इलच्। कल् इलच्—कल् इल सु।

(3) अनिलः (= वायु, वायुरोग)—अनिति जीवति येन सः। जीवयति यः सः। अन जीवने से इलच्। अन् इलच् सु।

(4) महिलः (= पुरुष)—महयति यः। महयति यम्। महयति येन। मह्यते पूज्यते। मह पूजायाम्। मह् इलच् सु। महिल सु—महिलम् (= स्थान)। 'स्त्रियां' के अधिकार में टाप् होकर—महिला (= स्त्री)।

(5) महेला (= स्त्री) बहुल वचन के ग्रहण से एलच् होकर यह शब्द बनता है।

(6) भडिलः (= शूर, सेवक)—भडति हिनस्ति। भड हिंसायाम् इति सौत्रो धातुः। भडति परिचरति स्वामिनम्। भड् इलच्—भडिल सु।

(7) भण्डिलः (= कल्याण)—भण्डयति परिहसति येन सः। भडि परिभाषणे से इलच्। 'इदितो नुम् धातोः' से नुम्, अनुस्वार, परसवर्ण—भण्ड् इलच्—सु।

(8) शण्डिलः (= एक ऋषि)—शण्डति। रोगयुक्तो भवति। शडि रुजायां सङ्घाते च। नुम्, अनुस्वार, परसवर्ण—शण्ड् इलच् सु।

(9) पिण्डिलः (= गणक, पुल)—पिण्डति सङ्घातं करोति। पिडि सङ्घाते से इलच्। पि नुम् ड् इलच्—पिण्ड् इल—सु।

(10) तुण्डिलः (= पेटू)—तुण्डति पृथक् करोति। तुडि तोडने।

(11) कोकिलः (= कोयल)—कोकते आदत्तेऽसौ। कुक आदाने से इलच्। कुक् इल—'पुगन्तलघूपधस्य च' से लघूपध गुण। कोक् इल—सु।

(12) भविलः (= प्रेमी, कामी)—यो भवति। भू सत्तायाम् से इलच्। 'सार्वधातुकार्धधातुकयोः' से गुण, अदेङ् गुणः—भो इल—एचोऽयवायावः, सु।

(13) कुटिलः (= क्रूर, कपटी)—बहुलवचनात् कुट् इलच् सु। कुटति कौटिल्यं करोति। कुट् इलच् सु।

**विशेष**—नारायणभट्ट 'मडि' के स्थान पर 'मटि' पाठ मानते हैं तथा 'चण्डि' का पाठ अधिक स्वीकार करते हैं। द्रष्टव्य—'निमहिमटिमण्डिचण्डिशण्डिपिण्डि०।

## (55) कमेः पश्च [1.55]

**पद०**—कमे: 5.1, प: 1.1, च—अव्य०।
**अनु०**—'सलि.....इलच्' (उ०सू० 1.54) से 'इलच्' का अनुवर्त्तन है।
**सं०**—कम्धातोर् इलच् प्रत्ययः स्यात्, धातोः स्थाने 'प्' इत्यादेशो भवति।

**व्याख्या**—कमेः यह पञ्चम्यन्त पद है। कम् से परे प्रत्यय होता है। 'पः' यहाँ पकारस्थ अकार उच्चारणार्थ है। कमेः इसे विभक्तिविपरिणाम से षष्ठ्यन्त मानकर इसका सम्बन्ध 'पः' पद के साथ है। कम् धातु को प् आदेश होता है। 'अलोऽन्त्यस्य' से यह प् आदेश कम् के अन्त्य अल् (म्) के स्थान पर होता है। अर्थ—कम् धातु से इलच् प्रत्यय होता है और धातु को 'प्' अन्तादेश होता है।

**स्वा०द०वृ०**—कमेरिलच् मस्य पः। कामयतेऽसौ **कपिलः** वर्णभेदो मुनिविशेषो वा।

**उदा०**—(1) कपिलः (= एक मुनि, एक रंग)—कामयतेऽसौ। कमु कान्तौ से इलच्। कम् इल—'प्' अन्तादेश—कप् इल सु।

**विशेष**—श्वेतवनवासी कब् धातु से इलच् प्रत्यय और धातु को 'प्' अन्तादेश स्वीकार करते हैं। द्रष्टव्य—कबेः पश्च। कबृ धातु 'वर्ण' अर्थ में पठित है। नारायण भट्ट अन्तादेश न करके 'कपि चलने' धातु से इलच् प्रत्यय मानते हैं। द्रष्टव्य कपेश्च।

## (56) गुपादिभ्यः कित् [1.56]

**पद०**—गुपादिभ्य: 5.1, कित् 1.1
**अनु०**—'सलि.....इलच्' (उ०सू० 1.54) से 'इलच्' का अनुवर्त्तन है।
**सं०**—गुपादिभ्यो धातुभ्य इलच् स्यात्, स च कित्सञ्ज्ञः।

**व्याख्या**—गुपादि एक गण है। गुपादि के द्वारा गुप्, तिज् तथा गुह्—इन तीन धातुओं का संग्रह होता है। यह अतिदेशसूत्र है। प्रत्यय को कित् करने का प्रयोजन गुणनिषेध है। अर्थ—गुप् आदि धातुओं से परे इलच् प्रत्यय होता है और वह कित् होता है।

**स्वा०द०वृ०**—इलचः कित्त्वं गुणनिषेधार्थम्। गोपायति रक्षति प्रजा इति **गुपिलः** राजा वा। तेजते तीक्ष्णीकरोति तिज्यते सह्यते वा सर्वैः **तिजिलः** चन्द्रमा वा। गूहते वृक्षैराच्छादितो भवतीति **गुहिलं** वनं वा।

**अन्येऽपि**—पूजितुमादर्त्तुं योग्यः **पूजिलः** विद्वान्। शोषयति सर्वमिति **शुषिलः** वायुः। देवते प्रकाशयति धर्ममिति **देविलः** धार्मिको वा।

**उदा०**—(1) गुपिलः (= राजा)—गोपायति रक्षति प्रजाः। गुपू रक्षणे से इलच्। गुप् इल—'पुगन्तलघूपधस्य च' से लघूपध गुण प्राप्त, 'क्ङिति च' निषेध, सु।

(2) तिजिलः (= चन्द्रमा)—तेजते तीक्ष्णीकरोति। तिज्यते सह्यते सर्वैः। तिज निशाने से इलच्। पूर्ववत् लघूपध गुण का निषेध, सु।

(3) गुहिलम् (= वन)—गूहते वृक्षैराच्छादितो भवति। गुहू संवरणे धातु से। गुह् इलच्—गुह् इल—सु।

## (57) मिथिलादयश्च [1.57]

**पद०**—मिथिलादयः 1.3, च—अव्य०।

**अनु०**—पूर्ववत् 'इलच्' का अनुवर्त्तन है।

**सं०**—मिथिलादयः शब्दा इलच् प्रत्ययान्ता निपात्यन्ते।

**व्याख्या**—निपातन किया जा रहा है। मिथिला आदि शब्द इलच्-प्रत्ययान्त निपातित हैं। मिथिलादि एक गण है।

**स्वा०द०वृ०**—मिथिलादय इलच्प्रत्ययान्ता निपात्यन्ते। मथ्यते या सा **मिथिला**, मथ्यन्ते शत्रवो यत्र सा **मिथिला** विदेहानां राज्ञां नगरी वा। [धातोर्] अकारस्येत्त्वं निपात्यते। गच्छन्ति प्राप्नुवन्ति यां सा **गतिला** वेत्रलता वा। गमेस्तकारान्तादेशः। या तङ्कति कृच्छ्रेण जीवति सा **तकिला** ओषधिर्वा। [धातोर्] नलोपः। चमति भक्षयतीति **चण्डिला** काचिन्नदी वा। धातोर्डुगागमः। यः पथति निरन्तरं गच्छति स **पथिलः** पथिको वा, इत्यादि।

**उदा०**—(1) मिथिला (= एक नगरी)—मथ्यते या सा। मथ्यन्ते शत्रवो यस्यां सा। 'मथि हिंसासङ्क्लेशनयोः' से इलच्। धातु की उपधा (अकार) के स्थान पर निपातन से इकार—मिथ् इल्—'स्त्रियाम्' के अधिकार में 'अजाद्यतष्टाप्' से टाप्। मिथिल टाप्—हलन्त्यम्, चुटू, अकः सवर्णे दीर्घः, सु, लोप।

(2) गतिला (= बेंत की लता)—गच्छंन्ति प्राप्नुवन्ति यां सा। गम्लृ गतौ से इलच्। गम् इल—धातु को 'त्' अन्तादेश निपातन से। गत् इल—पूर्ववत् टाप्।

(3) तकिला (= एक ओषधि)—या तङ्कति कृच्छ्रेण जीवति। 'तकि कृच्छ्रजीवने' से इलच्। धातु के अनुनासिक का निपातन से लोप—तङ्क् इल—तक् इल टाप्। सु लोप।

(4) चण्डिला (= एक नदी)—चमति भक्षयति। 'चमु छमु जमु अदने' से

इलच्। चम् इल—धातु को निपातन से डुक् आगम क् की इत्सञ्ज्ञा, उकार उच्चारणार्थ, कित् होने से धातु का अन्ताऽवयव, आद्यन्तौ टकितौ—चम् ड् इल—'नश्चाऽपदान्तस्य झलि' से अनुस्वार—चंड् इल—अनुस्वारस्य ययि परसवर्णः, 'स्थानेऽन्तरतमः' से पर-सवर्ण—चण्ड् इल सु।

(5) पथिलः (= पथिक)—यः पथति निरन्तरं गच्छति। पथे गतौ धातु से इलच्। पथ् इल—सु।

## (58) पतिकठिकुठिगडिगुडिदंशिभ्य एरक् [1.58]

**पद०**—पतिकठिकुठिगडिगुडिदंशिभ्यः 5.3, एरक् 1.1

**सं०**—पत् कठ् कुठ् गड् गुड् दंश्—इत्येतेभ्यो धातुभ्य एरक् प्रत्ययो भवति।

**व्यख्या**—पतिकठिकुठिगडिगुडिदंशिभ्यः यह पञ्चम्यन्त पद है। पत् आदि धातुओं से परे प्रत्यय होता है। एरक् का क् इत् है। प्रत्यय को कित् करने का प्रयोजन गुणनिषेध करना है। अर्थ—पत्, कठ्, कुठ्, गड्, गुड् और दंश्—इन धातुओं से परे एरक् प्रत्यय होता है।

**स्वा०द०वृ०**—पतति गच्छतीति **पतेरः** गन्ता पक्षी वा। कठति कृच्छ्रेण जीवतीति **कठेरः** कारागारिको वा। **कुठेरः** कृच्छ्रजीवी पर्णाशो वा 'कटहर' इति प्रसिद्धम्। गडति सिञ्चतीति **गडेरः** मेघो वा। गुडति रक्षति स **गुडेरः** रक्षकः। दशति दंष्ट्राभ्यामिति **दशेरः** हिंसको जीवो वा। [ कित्त्वाद् ] अनुनासिकलोपः।

**उदा०**—(1) पतेरः (= पक्षी, छिद्र)—पतति। पत्लृ गतौ से एरक्—पत् एर सु।

(2) कठेरः (= कारागारिक)—कठति कृच्छ्रेण जीवति। कठ कृच्छ्रजीवने से एरक्—कठ् एर सु।

(3) कुठेरः (= कटहल)—कुठतीति। कुठ् एरक्—लघूपध गुण का निषेध। कुठि धातु इदित् है। 'इदितो नुम् धातोः' से नुम् प्राप्त, बाहुलकात् नुम् का निषेध।

(4) गडेरः (= बादल)—गडति सिञ्चति। गड सेचने से एरक्—गड् एर सु।

(5) गुडेरः (= रक्षक, पिण्ड, ग्रास)—गुडति रक्षति। गुड रक्षणे से एरक्। लघूपध गुण का निषेध।

(6) दशेरः (= सिंह)—दशतीति। दंश दशने से एरक्—दंश् एर—'अनिदितां हल उपधाया०' से अनुनासिक लोप, सु।

नारायणभट्ट 'पथिकथि' पाठ अधिक मानते हैं। अतः (7) पथेरः, (8) कथेरः शब्द निष्पन्न होते हैं।

## (59) कुम्बेर्नलोपश्च [1.59]

**पद०**—कुम्बे: 5.1, नलोप: 1.1, च—अव्य० ।

**अनु०**—'पतिकठि·····एरक्' (उ०सू० 1.58) से 'एरक्' का अनुवर्त्तन है ।

**सं०**—कुम्ब्धातोर् एरक् प्रत्यय: स्यात्, धातोश्च नकारलोपो भवति ।

**व्याख्या**—कुम्बे: यह पञ्चम्यन्त पद है । कुम्बि यह इक् प्रत्ययपूर्वक निर्देश है । कुबि धातु इदित् है । इसे नुम् आगम, अनुस्वार और परसवर्ण होकर 'कुम्ब्' ऐसा रूप बनता है । अर्थ—कुम्ब् धातु से परे एरक् प्रत्यय होता है तथा धातु के नकार का लोप होता है । कुम्ब् में मकार ही नुम् का नकार है । अत: म् का लोप होता है ।

**स्वा०द०वृ०**—कुम्बत्यन्यानाच्छादयतीति **कुबेर:** धनाध्यक्षो विद्वान् वा। इदित्त्वादप्राप्तो नलोप एरकि विधीयते ।

**उदा०**—(1) कुबेर: (= विद्वान्, धन का स्वामी)—कुम्बति अन्यान् आच्छादयति । कुबि आच्छादने से एरक्—कु नुम् ब्—'इदितो नुम् धातो:' से नुम्, अनुबन्धलोप—कुंब्—'नश्चाऽपदान्तस्य झलि' से अनुस्वार—कुम्ब् एरक्—'अनुस्वारस्य ययि परसवर्ण:' से परसवर्ण, 'हलन्त्यम्' से क् की इत्सञ्ज्ञा । चूँकि कुबि धातु इदित् है अत: 'अनिदितां हल उपधाया०' की प्राप्ति नहीं होती है । प्रकृत सूत्र से न् का लोप—कुब् एर सु ।

## (60) शदेस्तश्च [1.60]

**पद०**—शदे: 5.1, त: 1.1, च—अव्य० ।

**अनु०**—'पतिकठि·····एरक्' (उ०सू० 1.58) से 'एरक्' की अनुवृत्ति है ।

**सं०**—शद् इत्येतस्माद् धातोर् एरक् प्रत्यय: स्यात्, धातोश्च तकारोऽन्तादेशो भवति ।

**व्याख्या**—शदि यह इक् प्रत्यय युक्त निर्देश है। शदे: पञ्चम्यन्त पद है। 'तस्मादित्युत्तरस्य' की प्रवृत्ति होती है । तकार आदेश धातु को होता है । 'अलोऽन्त्यस्य' से धातु के अन्त्य अल् (दकार) के स्थान पर तकार आदेश होता है । तकारस्थ अकार उच्चारणार्थ है। अर्थ—शद् धातु से परे एरक् आदेश होता है और धातु को 'त्' अन्तादेश होता है ।

**स्वा०द०वृ०**—शीयते शातयति दु:खाकरोतीति **शतेर:** शत्रुर्वा। धातोर्दकारस्य तकारादेश: ।

**उदा०**—(1) शतेर: (= शत्रु, विनाश करने वाला)—शीयते शातयति दु:खाकरोति । शद्लृ शातने धातु से एरक्—शद् एरक्—'त्' अन्तादेश । शत् एर सु ।

## (61) मूलेरादयः [1.61]

**पद०**—मूलेरादयः 1.3
**अनु०**—पूर्ववत् 'एरक्' इत्यनुवर्त्तते।
**सं०**—मूलेरादयः शब्दा एरक्प्रत्ययान्ता निपात्यन्ते।

**व्याख्या**—मूलेर आदि एरक् प्रत्ययान्त शब्दों का निपातन किया जाता है।

**स्वा०द०वृ०**—मूलेरादंय एरक्प्रत्ययान्ता निपात्यन्ते। यो मूलति सर्वोपरि तिष्ठति स **मूलेरः** भूपतिर्वा। गुधति सर्वतो वेष्टयतीति **गुधेरः** रक्षको वा। गूहते येन स **गुहेरः** लोहघातनो वा। मुह्यति विक्षिप्त इव भवतीति **मुहेरः** मूर्खः [ वा ]; मुह्यत्यनेन वृषभादिरिति वा **मुहेरः** कणमर्दनादौ वृषभमुखबन्धनम्। 'मुहेर' इत्येव भाषायां प्रसिद्धम्।

**उदा०**—(1) मूलेरः (= राजा, जटामांसी)—मूलति सर्वोपरि तिष्ठति। मूल प्रतिष्ठायाम् धातु से एरक्—मूल् एरक्—सु।
(2) गुधेरः (= रक्षक)—गुधति सर्वतो वेष्टयति। गुध परिवेष्टने से एरक्—गुध् एरक्।
(3) गुहेरः (= लोहघातन)—गूहते येन सः। गुह संवरणे से एरक्—गुह् एर—लघूपध गुणनिषेध।
(4) मुहेरः (= मूर्ख)—मुह्यतीति। मुह वैचित्ये से एरक्।

## (62) कबेरोतच् पश्च [1.62]

**पद०**—कबेः 5.1, ओतच् 1.1, पः 1.1, च—अव्य०।
**सं०**—कब्धातोर् आतच् प्रत्ययः स्यात्, धातोश्च 'प्' इत्यादेशो भवति।

**व्याख्या**—कबि यह इक्सहित निर्देश है। कबेः पञ्चम्यन्त पद है। 'तस्मादित्युत्तरस्य परिभाषा प्रवृत्त होती है। कबेः को विभक्तिविपरिणाम से षष्ठ्यन्त मानकर प् आदेश होता है। 'अलोऽन्त्यस्य' से प् आदेश कब् धातु के अन्त्य अल् (ब्) के स्थान पर होता है। पकारस्थ अकार उच्चारणार्थ है। अर्थ—कब् धातु से ओतच् प्रत्यय होता है तथा धातु को प् अन्तादेश होता है।

**स्वा०द०वृ०**—ओतच्प्रत्ययो बकारस्य पकारश्च। कबते विचित्रवर्णो भवतीति **कपोतः**, पक्षिभेदो वा।

**उदा०**—(1) कपोतः (कबूतर)—कबते विचित्रवर्णो भवति। कबृ वर्णे से ओतच्—कब् ओतच्—कप् ओत—प् अन्तादेश, सु। 'चितः' से अन्तोदात्त स्वर।

**विशेष**—वैदिक वाङ्मय में 'कपोत' शब्द मध्योदात्त प्राप्त होता है। इसकी साधुता आचार्य सायण (ऋग्भाष्य 1.30.4) 'व्यत्ययो बहुलम्' के द्वारा प्रदर्शित करते हैं। अत: ओतच् के स्थान पर 'ओत' प्रत्यय मान लेना अधिक उचित प्रतीत होता है। आचार्य भोज कम्प् धातु से ओत प्रत्यय करके इस शब्द को निष्पन्न करते हैं। द्रष्टव्य—कम्पेरोतो नलोपश्च।

## (63) भातेर्डवतुप् [1.63]

**पद०**—भाते: 5.1, डवतुप् 1.1

**सं०**—भा इत्येतस्माद् धातोर् डवतुप् प्रत्यय: स्यात्।

**व्याख्या**—भा धातु से डवतुप् प्रत्यय होता है। प् तथा ड्, इनकी इत्सञ्ज्ञा है। डित्करण का प्रयोजन टिलोप है। पित्करण का प्रयोजन 'अनुदात्तौ सुप्पितौ' से अनुदात्त स्वर करना है। तकारस्थ उकार उच्चारणार्थ है। शेष अवत् बचता है।

**स्वा०द०वृ०**—भाति दीप्तो भवति दीपयति वा स **भवान्**। सर्वनामवाचक: सर्वनामसंज्ञकश्चायं शब्द:।

**उदा०**—(1) भवान् (= आप)—भाति दीप्तो भवति। भा दीप्तौ से डवतुप्। भा डवतुप्—भा अवत्—अनुबन्धलोप—भ् अवत्—भसञ्ज्ञा न होने पर भी डित् करने के सामर्थ्य से भकारोत्तरवर्त्ती आकार का 'टे:' (पा० 6.4.143) से टिलोप, अचोऽन्त्यादि टि—भवत् सु—'अत्वसन्तस्य चाऽधातो:' (पा० 6.4.14) से उपधादीर्घ—भवात् स्—'उगिदचां सर्वनामस्थाने०' (पा० 7.1.70) से नुम्—भवा नुम् त् स्—अनुबन्धलोप, 'हल्ङ्याब्भ्यो दीर्घात्०' (पा० 6.1.67) से अपृक्त सकार का लोप—भवान्त् स—भवान्त्—'संयोगान्तस्य लोप:' (पा० 8.2.23) से संयोगान्त का लोप।

**विशेष**—प्रत्यय को पित् करने का प्रयोजन 'अनुदात्तौ सुप्पितौ' (पा० 3.1.3) से अनुदात्त स्वर होता है। प्रकृत में डवतुप् प्रत्यय पित् है। यहाँ डित्करण सामर्थ्य से टि का लोप होता है। तब अनुदात्त होने पर भी टिलोप हो जाने पर 'अनुदात्तस्य च यत्रोदात्तलोप:' (पा० 6.1.158) से आद्युदात्त स्वर प्राप्त होता है। अत: डवतुप् को पित् करना व्यर्थ प्रतीत होता है। पेरिसूरि आदि ने पित् रहित 'डवतु' प्रत्यय स्वीकार किया है।

## (64) कठिचकिभ्यामोरन् [1.64]

**पद०**—कठिचकिभ्याम् 5.2, ओरन् 1.1

**सं०**—कठ् चक् इत्येताभ्यां धातुभ्याम् ओरन् प्रत्ययः स्यात्।

**व्याख्या**—कठ् और चक् धातुओं से परे ओरन् प्रत्यय होता है। न् की इत्सञ्ज्ञा है। न् अनुबन्ध 'ञ्नित्यादिर्नित्यम्' से आद्युदात्त स्वर के लिए है।

**स्वा०द०वृ०**—कठति कच्छ्रेण जीवति येन स **कठोरः**, कठिनः पूर्णो वा। चकते तृप्यति स **चकोरः**, पक्षिविशेषो वा।

**उदा०**—(1) कठोरः (= कठोर, क्रूर)—कठति कृच्छ्रेण जीवति येन। कठ कृच्छ्रजीवने से ओरन्—कठ् ओरन्—कठोर सु।

(2) चकोरः (= चातक पक्षी)—'चक तृप्तौ प्रतिघाते च' से ओरन्। चकते तृप्यति यः सः। चक् ओरन्—चक् ओर सु।

**विशेष**—प्रकृत में 'ओरच्' और 'ओरन्' दोनों प्रकार का पाठ उपलब्ध होता है। नित् आद्युदात्त तथा चित् अन्तोदात्त स्वर के लिए होता है। परन्तु यहाँ दोनों स्वर इष्ट नहीं है। आचार्य भोज ने अनुबन्ध रहित 'ओर' प्रत्यय माना है। मध्योदात्त स्वर की साधुता अव्युत्पत्तिपक्ष में 'लघावन्ते.....' (फि०सू० 42) से प्रदर्शित की जा सकती है।

## (65) किशोरादयश्च [1.65]

**पद०**—किशोरादयः 1.3, च—अव्य०।

**अनु०**—'कठिचकिभ्यामोरन्' (उ०सू० 1.64) से 'ओरन्' की अनुवत्ति है।

**सं०**—किशोरादिगणपठिताः शब्दा ओरन्प्रत्ययान्ता निपात्यन्ते।

**व्याख्या**—किशोर आदि ओरन् प्रत्ययान्त शब्द निपातित किये जा रहे हैं। किशोरादि एक गण है।

**स्वा०द०वृ०**—किशोरादय ओरन्प्रत्ययान्ता निपात्यन्ते। किं शृणाति हिनस्तीति **किशोरः**, अश्वशावको वा। किमो मलोपः 'शॄ'धातोष्टिलोपश्च निपातनम्। सोढुं शीलः **सहोरः**, साधुर्वा। गायति शब्दं करोतीति **गौरः**। अरुणे श्वेते पीते निर्मले च वाच्यलिङ्गः—गौरः कुमारः, गौरी कन्या, गौरं कुलम्, गौरं कमलम्, गौरः सर्षपः इत्यादि। 'गै'धातोराकारादेशे कृत ओकारेण सह वृद्ध्येकादेशः। आयादेशस्त्वात्वाप्राप्तौ भवति, इत्यादि।

**उदा०**—(1) किशोरः (= अश्ववत्स, बच्चा, सूर्य, तरुण)—किं शृणाति हिनस्ति। किम् शब्द के उपपद रहते शॄ हिंसायाम् धातु से ओरन्—किम् शॄ ओरन्—निपातन से टिलोप—किम् श् ओरन्—निपातन से किम् का अन्त्यलोप। किश् ओर सु।

(2) सहोर: (= साधु)—सोढुं शील:। षह मर्षणे से ओरन्। षह—सह्—'धात्वादे: ष: स:'—सह् ओरन् सु।

(3) गौर: (= अरुण, श्वेत, पाण्डु, निर्मल)—गायति शब्दं करोति। गै शब्दे धातु से ओरन्। 'एकाच उपदेशेऽशिति' से आकार आदेश—ग् आ ओर—'वृद्धिरेचि' से वृद्धि एकादेश—गौर सु। 'स्त्रियाम्' के अधिकार में 'षिद्गौरादिभ्यश्च' से ङीष् हुआ—गौरी। नपुंसकलिंग में सु को 'अतोऽम्' से अम् आदेश—गौरम्।

## (66) कपिगडिगण्डिकटिपटिभ्य ओलच् [1.66]

**पद०**—कपिगडिगण्डिकटिपटिभ्य: 5.3, ओलच् 1.1

**सं०**—कप् गड् गण्ड् कट् पट्—इत्येतेभ्यो धातुभ्य ओलच् स्यात्।

**व्याख्या**—कपिगडिगण्डिकटिपटिभ्य: यह पञ्चम्यन्त पद है। इन धातुओं से परे ओलच् होता है। च् की इत्सञ्ज्ञा है। च् अनुबन्ध का प्रयोजन 'चित:' से अन्तोदात्त स्वर करना है। अर्थ—कप्, गड्, गण्ड्, कट् और पट्—इन धातुओं से परे ओलच् प्रत्यय होता है।

**स्वा०द०वृ०**—कम्पते चलति स **कपोल:**, वदनैकदेशो वा। सूत्रे निर्देशादेव नलोप:। गडति सिञ्चति स **गडोल:**। गण्डति स **गण्डोल:**, वदनैकदेशो वा। गडोलगण्डोलौ गुडकपर्यायौ वा। कटति वर्षत्यावृणोति वा स **कटोल:**, कटुश्चाण्डालो वा। पटति गच्छति स **पटोल:**, फलविशेषो वस्त्रविशेषो वा।

**बाहुलकात्**—कण्डति माद्यतीति **कण्डोल:**, चाण्डालो वा।

**उदा०**—(1) कपोल: (= गाल)—कम्पते चलति। कपि सञ्चलने से ओलच्। इकार इत् है। 'इदितो नुम् धातो:' से नुम् आगम—क न् प्—सूत्र में 'कपि' ऐसा अनुनासिकरहित निर्देश से ज्ञापित होता है कि 'कन् प्' इस दशा में 'न्' का लोप हो जाता है—कप् ओलच् सु।

(2) गडोल: (= गुडक, मुख का एक भाग)—गडति सिञ्चति। गड सेचने—गड् ओलच् सु।

(3) गण्डोल: (= मुख का एक भाग)—गण्डतीति। गडि वदनैकदेशे धातु से ओलच्। 'इदितो नुम् धातो:' से नुम्—गनुम् ड्—'नश्चाऽपदान्तस्य झलि' से अनुस्वार—गंड्—'अनुस्वारस्य ययि परसवर्ण:' से परसवर्ण—गण्ड् ओलच् सु।

(4) कटोल: (= कटु, चाण्डाल)—कटति वर्षति आवृणोति। कट वर्षाऽऽ-वरणयो: धातु से ओलच्—कट् ओलच् सु।

(5) पटोलः (= परवल, वस्त्र का प्रकार)—पटति गच्छति। पट गतौ से ओलच्।

**विशेष**—श्वेतवनवासी तथा नारायण भट्ट के अनुसार 'ओलक्' प्रत्यय होता है। कित्करण गुण-वृद्धि के निषेध के लिए होता है, परन्तु प्रकृत में गुणवृद्धि का प्रसङ्ग ही नहीं है। अतः कित्करण व्यर्थ है। प्रत्यय को चित्करण भी युक्तिसङ्गत प्रतीत नहीं होता है, कारण कि 'लघावन्ते द्वयोश्च०' (फि०सू० 42) से मध्योदात्त स्वर सिद्ध ही है। अतः 'ओल' प्रत्यय ही उचित है।

## (67) मीनातेरूरन् [1.67]

**पद०**—(1) मीनातेः 5.1, ऊरन् 1.1
**सं०**—'मी' इत्येतस्माद् धातोर् ऊरन् प्रत्ययो भवति।

**व्याख्या**—मी धातु से 'ऊरन्' प्रत्यय होता है। प्रत्यय का 'न्' इत् है। 'न्' अनुबन्ध का प्रयोजन 'ञ्नित्यादिर्नित्यम्' से आद्युदात्त स्वर करना है।

**स्वा०द०वृ०**—मीनाति हन्तीति **मयूरः**, पक्षिविशेषो वा।

**बहुलवचनात्**—मीनातेरात्वनिषेधः धातोर्गुणादेशः।

**उदा०**—(1) मयूरः (= मोर, एक पुष्प)—मीनाति हन्ति (सर्पादिकम्)। मीञ् हिंसायाम् से ऊरन्। 'मीनातिमिनोतिदीङां ल्यपि०' (पा० 6.1.49) से आत्व प्राप्त, बहुलवचन से आत्व का निषेध—मी ऊर—'सार्वधातुकार्धधातुकयोः' से इगन्त अङ्ग को गुण—मे ऊर—'एचोऽयवायावः' से अय्, सु।

**विशेष**—दशपादी (8.28) से 'ऊर' प्रत्यय का निर्देश है। कुछ ग्रन्थों में 'ऊरच्' प्रत्यय का निर्देश है, परन्तु न् अथवा च् अनुबन्धों का कोई औचित्य प्रतीत नहीं होता है।

## (68) स्यन्देः सम्प्रसारणं च [1.68]

**पद०**—स्यन्देः 5.1, सम्प्रसारणम् 1.1, च—अव्य०।
**अनु०**—'मीनातेरूरन्' (उ०सू० 1.67) से 'ऊरन्' का अनुवर्त्तन है।
**सं०**—स्यन्द्धातोर् ऊरन् प्रत्ययः स्याद्, धातोश्च सम्प्रसारणं स्यात्।

**व्याख्या**—स्यन्देः यह पञ्चम्यन्त पद है। 'तस्मादित्युत्तरस्य' की प्रवृत्ति होती है। स्यन्देः को विभक्तिविपरिणाम से षष्ठ्यन्त मानकर इसका 'सम्प्रसारणम्' के साथ सम्बन्ध किया जाता है। अर्थ—स्यन्द् धातु से परे ऊरन् प्रत्यय होता है तथा धातु को सम्प्रसारण होता है। 'इग्यणः' से यण् (य्) के स्थान पर इक् (इ) होता है।

**स्वा०द०वृ०**—स्यन्दते प्रस्रवति तत् **सिन्दूरम्,** रक्तचूर्णं वृक्षभेदो वा। ऊरन्प्रत्यये यकारस्य सम्प्रसारणम्।

**उदा०**—(1) सिन्दूरम् (= सिन्दूर)—स्यन्दते प्रस्रवति तत्। स्यन्दू प्रस्रवणे से ऊरन्। स्यन्द् ऊरन्–सम्प्रसारण—स् इ अ न् द् ऊर—'सम्प्रसारणाच्च' से पूर्वरूप—सिन्दूर सु।

## (69) सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् [1.69]

**पद०**—सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यः 5.3, तुन् 1.1

**सं०**—सि तन् गम् मस् सच् अव् धा क्रुश्—इत्येतेभ्यो धातुभ्यस्तुन् स्यात्।

**व्याख्या**—'सित····शिभ्यः' यह पञ्चम्यन्त पद है। 'तस्मादित्युत्तरस्य' परिभाषा प्रवृत्त होती है। अर्थ—सि, तन्, गम्, मस्, सच्, अव्, धा और क्रुश् धातुओं से परे तुन् प्रत्यय होता है। प्रत्यय के न् की इत् सञ्ज्ञा है। न् अनुबन्ध का प्रयोजन 'ञ्नित्यादिर्नित्यम्' से आद्युदात्त स्वर करना है।

**स्वा०द०वृ०**—सिनोति बध्नातीति **सेतुः,** समुद्रो वा। तितुत्रतथ० [ 7.2.9 ] इतीट् निषेधः। तनोति विस्तृणोतीति **तन्तुः,** सूत्रं वा। वरामुत्तमां विद्यां तनोति स **वरतन्तुः** मुनिः। वरतन्तुना प्रोक्तो 'वारतन्तवीयो' ग्रन्थः। गच्छतीति **गन्तुः,** पथिको वा। समन्ताद् गच्छति भ्रमतीति **आगन्तुः,** अभ्यागतो वा। मस्यति परिणमतीति **मस्तुः,** दधनि निस्सृतमुदकं वा। सच्यन्ते समवेताः क्रियन्ते ते **सक्तवः,** पक्वयवादिचूर्णं वा। अवति रक्षणादिकं करोति स **ओतुः,** विडालो वा। [ बाहुलकादङ्कित्यपि ] 'अव'धातोः **ज्वरत्वर०** [ 6.4.20 ] इति सूत्रेणोपधावकारयोरूठ्। दधाति धरति पोषति वा स **धातुः,** अश्मनो विकारः सुवर्णादिः शरीस्थवातादिर्वा। क्रोशत्याह्वयति रोदिति वा स **क्रोष्टुः,** क्रोष्टा शृगालो वा।

**उदा०**—(1) सेतुः (= पुल, सीमा)—सिनोति बध्नाति। षिञ् बन्धने से तुन्। 'धात्वादेः षः सः' से षकार को सकार—सि तुन्—हलन्त्यम्, 'आर्धधातुकं शेषः' से आर्धधातुक सञ्ज्ञा, 'आर्धधातुकस्येड् वलादेः' से इट् आगम। 'तितुत्रतथ०' (पा० 7.2.9) से निषेध, 'सार्वधातुकार्धधातुकयोः' से गुण—से तु सु।

(2) तन्तुः (= सूत्र, सन्तान, मकर, परमात्मा, मकड़ी)—तनोति विस्तृणोति। तनु विस्तारे से तुन्—तन् तुन्—अनुबन्धलोप, सु।

(3) गन्तुः (= पथिक)—(समन्तात्) गच्छति भ्रमति। गम्लृ गतौ से तुन्। गम् तु—अनुबन्धलोप, 'नश्चाऽपदान्तस्य झलि' से अनुस्वार, 'अनुस्वारस्य ययि परसवर्णः' से परसवर्ण (न्)—गंतु—गन्तु सु। (4) आगन्तुः (= अतिथि)—आ गम् तुन्।

(5) मस्तुः (= मट्ठा)—मस्यति परिणमति। मसी परिणामे से तुन्—मस् तु सु। यह शब्द नपुँसकलिंग भी होता है।

(6) सक्तुः (= सत्तू)—सच्यन्ते समवेताः क्रियन्ते ते सक्तवः। षच समवाये से तुन्। धात्वादेः षः सः—स च् तु—'चोः कुः' से कुत्व—सक्तु सु।

(7) ओतुः (= बिलाव)—अवति रक्षणं करोति। अव गतिरक्षणादिषु से तुन्—अव् तुन्—'ज्वरत्वरस्रिव्य०' (पा० 6.4.20) से उपधा और वकार के स्थान पर ऊठ् आदेश—ऊ तु—'सार्वधातुकार्धधाकतुयोः' से गुण—ओ तु सु।

(8) धातुः (= स्वर्ण आदि धातु, शरीर के धातु)—दधाति धरति पोषति। डुधाञ् धारणपोषणयोः से तुन्—धा तु सु।

(9) क्रोष्टुः (= शृगाल)—क्रोशत्याह्वयति रोदिति। क्रुश आह्वाने से तुन्—क्रुश् तु—'व्रश्चभ्रस्जसृज०' (पा० 8.2.36) से शकार के स्थान पर ष्—क्रुष् तु—'पुगन्त-लघूपधस्य च' से लघूपध गुण—क्रोष् तु—'ष्टुना ष्टुः' से तकार को टकार, सु।

## (70) वसेरगारे णिच्च [1.70]

**पद०**—वसेः 5.1, अगारे 7.1, णित् 1.1, च—अव्य०।

**अनु०**—'सितनि·····स्तुन्' (उ०सू० 1.69) से 'तुन्' का अनुवर्त्तन है।

**सं०**—वस् इत्येतस्माद् धातोस्तुन् प्रत्ययः स्यात्, स च णित्सञ्ज्ञः अगारे गम्यमाने।

**व्याख्या**—अगारे यह सप्तम्यन्त पद है। इसका आशय है—'अगार' अर्थ वाच्य हो तो। तुन् प्रत्यय को णित् किया गया है। यह अतिदेश सूत्र है। णित्करण का प्रयोजन वृद्धिकार्य है। अर्थ—यदि 'अगार' अर्थ वाच्य हो तो वस् धातु से तुन् प्रत्यय होता है और वह णित् होता है। 'अगार' अर्थ वाच्य न हो तो तुन् प्रत्यय अवश्य होता है, परन्तु वह णित् नहीं होता है।

**स्वा०द०वृ०**—वसन्ति प्राणिनो यत्र तद् **वास्तु**, गृहं वा। अगारादन्यत्र णित्त्वाभावः। वसन्ति येन तद् **वस्तु**, द्रव्यं वा।

**उदा०**—(1) वास्तु (= गृह, भवनभूखण्ड)—वसन्ति प्राणिनो यस्मिन् तत्। वस निवासे से तुन्। वस् तुन्—अनुबन्धलोप—वास् तु—'अत उपधायाः' से उपधाभूत अत् को वृद्धि आदेश (आकार) हुआ, सु।

(2) वस्तु (= द्रव्य)—'अगार' अर्थ वाच्य नहीं है। प्रत्यय के णिद्वत् न होने से 'अत उपधायाः' से वृद्धि प्राप्त न हुई।

**विशेष**—दशपादी वृत्तिकार, श्वेतवनवासी आदि सभी ने प्रकृत सूत्र का योग-

**5 उ०को०**

विभाग (यथा—वसेस्तुन्, अगारे णिच्च) करके 'आप्नोतेर्ह्रस्वश्च' (उ०सू० 1.75) के अनन्तर पाठ किया है। निरुक्त टीकाकार स्कन्द स्वामी ने 'वसेरगारे णिच्च' ऐसा पाठ उद्धृत किया है। इससे सिद्ध होता है कि यह पाठ ही प्रामाणिक है।

## (71). पः किच्च [1.71]

**पद०**—पः 5.1, कित् 1.1, च—अव्य०।

**अनु०**—'सितनि·····स्तुन्' (उ०सू० 1.65) से 'तुन्' का अनुवर्त्तन है।

**सं०**—पाधातोस्तुन् प्रत्ययः स्यात्, स च कित्सञ्ज्ञः।

**व्याख्या**—यह अतिदेश सूत्र है। तुन् प्रत्यय को कित् किया ज़ा रहा है। कित्करण का प्रयोजन 'घुमास्थागापाजहातिसां हलि' से आकार को 'ई' आदेश करना है। अर्थ—पा धातु से परे तुन् प्रत्यय होता है और वह कित् होता है।

**स्वा०द०वृ०**—पिबत्युदकादिकं पाति प्राणिनो रक्षति वा स **पीतुः**, अग्निः सूर्यो वा। कित्त्वादीत्वम्।

**उदा०**—(1) पीतुः (= अग्नि, सूर्य, यूथपति)—पिबत्युदकादिकम्। पाति रक्षति प्राणिनः। पा पाने अथवा पा रक्षणे धातु से तुन्। पा तु—'घुमास्थागापाजहाति०' (पा० 6.4.66) से धातु के आकार को ईत्व—पीतु सु। ईत्वकरण सामर्थ्य से आर्धधातुकलक्षण गुण न हुआ।

## (72) अर्त्तेश्च तुः [1.72]

**पद०**—अर्त्तेः 5.1, च—अव्य०, तुः 1.1

**अनु०**—'पः किच्च' (उ०सू० 1.71) से 'कित्' का अनुवर्त्तन है।

**सं०**—ऋधातोस्तुप्रत्ययः स्यात्, स च कित्।

**व्याख्या**—'ऋ' धातु से परे 'तु' प्रत्यय होता है और वह कित् होता है। यह भी अतिदेश सूत्र है। तु और तुन् में स्वर का अन्तर है। कित् करने का प्रयोजन आर्धधातुकलक्षण गुण का निषेध करना है।

**स्वा०द०वृ०**—चकारात्तुः किद्भवति। पुनः पुनर्ऋच्छति गच्छत्यागच्छतीति **ऋतुः**, वसन्तादिः स्त्रीणां रजःपतनकालो वा।

**उदा०**—(1) ऋतुः (= ऋतु, युगारम्भ, स्त्रियों का रजोदर्शन)—(पुनः पुनर्) ऋच्छति गच्छत्यागच्छति। ऋ तु—गुणनिषेध, सु।

**विशेष**—नारायणभट्ट 'अर्त्तेस्तुः' पाठ स्वीकार करते हैं।

## (73) कमिमनिजनिगाभायाहिभ्यश्च [1.73]

**पद०**—कमिमनिजनिगाभायाहिभ्यः 5.3, च—अव्य०।

**अनु०**—'अर्त्तेश्च तुः' से 'तु' की अनुवृत्ति है।

**सं०**—कम् मन् जन् गै भा या हि—इत्येतेभ्यो धातुभ्यस्तुप्रत्ययः स्यात्।

**व्याख्या**—कमि·····हिभ्यश्च यह पञ्चम्यन्त पद है। अर्थ—कम्, मन्, जन्, गै, भा, या और हि—इन धातुओं से परे 'तु' प्रत्यय होता है। 'तु' की 'आर्धधातुकं शेषः' से आर्धधातुक सञ्ज्ञा है। इसके परे रहते आर्धधातुकलक्षण गुण होता है।

**स्वा०द०वृ०**—कामयते येन स **कन्तुः**, कामश्चित्तं वा। मन्यते जानाति वा येन स **मन्तुः**, अपराधो वा। जन्यते शरीरादिधारणेन प्रादुर्भवति स **जन्तुः** जीवः। गायति षड्जादिस्वरान् आलापयति स **गातुः** गाथकः; गाते गच्छतीति **गातुः**, पथिको वा भृङ्गगन्धर्वौ वा। भाति प्रकाशयतीति **भातुः**, सूर्यो वा। याति प्रापयतीति **यातुः**, अध्वगः कालो वा। हिनोति येन यो वा कार्यरूपेण वर्धतेऽसौ **हेतुः** कारणम्।

**उदा०**—(1) कन्तुः (= काम, चित्त, धान्य)—कामयते येन। कमु कान्तौ से 'तु' हुआ। कम् तु—'नश्चाऽपदान्तस्य झलि' से अनुस्वार—कं तु—'अनुस्वारस्य ययि परसवर्णः' से परसवर्ण—क न् तु सु। आचार्य उज्ज्वलदत्त के अनुसार 'अर्जिदृशि-कम्यमिपशि०' (उ०सू० 1.27) से कु प्रत्यय तथा तुक् आगम होकर 'कन्तु' शब्द सिद्ध ही है। प्रकृत में इसका ग्रहण प्रपञ्चार्थ है।

(2) मन्तुः (= अपराध, मनुष्य, बुद्धि)—मन्यते जानाति येन। मन् तु—'मनु अवबोधने' धातु से 'तु' प्रत्यय, सु।

(3) जन्तुः (= जीव, पशु)—जन्यते प्रादुर्भवति शरीरादिधारणेन। जनी प्रादुर्भावे से 'तु'—जन् तु सु।

(4) गातुः (= गायक, गीत), कोयल, भौंरा)—गायति आलापयति। गै शब्दे से 'तु'—गै तु—'आदेच उपदेशेऽशिति' से आत्व—गा तु सु।

(5) भातुः (= सूर्य)—भाति प्रकाशयति। भा दीप्तौ—भा तु सु।

(6) यातुः (= काल, वायु, पथिक)—याति प्रापयति। या प्रापणे—या तु सु।

(7) हेतुः (= कारण, प्रयोजन, तर्क)—हिनोति येन। हि गतौ वृद्धौ च—हि तु—'सार्वधातुकार्धधातुकयोः' से गुण—हे तु सु।

## (74) चायः की [1.74]

**पद०**—चायः 5.1, की 1.1।

**अनु०**—'अर्त्तेश्च तुः' (उ०सू० 1.72) से 'तुः' का अनुवर्त्तन है।

**सं०**—चाय्धातोस्तुप्रत्ययः स्याद्, धातोः स्थाने 'की' इत्यादेशो भवति।

**व्याख्या**—चायः पञ्चम्यन्त पद है। चाय् से परे 'तु' प्रत्यय होता है। 'चायः' इसे विभक्तिविपरिणाम से षष्ठ्यन्त बना कर इसका सम्बन्ध 'की' के साथ होता है। 'की' अनेकाल् है। 'अनेकाल् शित् सर्वस्य' से यह (की) आदेश सम्पूर्ण स्थानी (चाय्) के स्थान पर होता है। अर्थ—चाय् धातु से परे 'तु' प्रत्यय होता है और चाय् के स्थान पर 'की' सर्वादेश होता है।

**स्वा०द०वृ०**—चायते पूजयति निशामयति श्रावयति वा स **केतुः**, ग्रहः पताका वा। **धूमकेतुः** उत्पातः।

**उदा०**—(1) केतुः (= एक ग्रह, पताका, चिह्न, किरण)—चायते पूजयति विनाशयति श्रावयति। चायृ पूजानिशामनयोः धातु से 'तु' प्रत्यय—चाय् तु—की तु—सर्वादेश—के तु—'सार्वधातुकार्धधातुकयोः' से गुण—के तु सु।

श्वेतवनवासी लिखते हैं कि कुछ विद्वान् ह्रस्वान्त (यथा—कि) आदेश मानते हैं।

## (75) आप्नोतेर्ह्रस्वश्च [1.75]

**पद०**—आप्नोतेः 5.1, ह्रस्व 1.1, च—अव्य०।

**अनु०**—'अर्त्तेश्च तुः' (उ०सू० 1.72) से 'तुः' का अनुवर्त्तन है।

**सं०**—आप्धातोस्तुप्रत्ययः स्यात्, धातोर्योऽच्, तस्य स्थाने ह्रस्वादेशो भवति।

**व्याख्या**—आप्नोतेः पद की आवृत्ति की जाती है। प्रथम 'आप्नोतेः' पद को पञ्चम्यन्त मानकर धातु से परे प्रत्यय होता है। द्वितीय 'आप्नोतेः' पद को विभक्ति-विपरिणाम से षष्ठ्यन्त मानकर धातु को ह्रस्व आदेश होता है। ह्रस्वादि सञ्ज्ञाएँ अच् वर्ण की ही होती है। अतः यहाँ 'अचश्च' पद उपलब्ध होता है। अर्थ—आप् धातु से परे 'तु' प्रत्यय होता है और धातु का जो अच्, उसके स्थान पर ह्रस्व आदेश होता है।

**स्वा०द०वृ०**—आप्नोति व्याप्नोति सर्वान् पदार्थानिति **अप्तुः**, शरीरं वा। तुप्रत्यये 'आप्लृ'धातोर्ह्रस्वत्वम्।

**उदा०**—(1) अप्तुः (= शरीर)—आप्नोति व्याप्नोति सर्वान् पदार्थान्। आप्लृ व्याप्तौ से 'तु' प्रत्यय। आप् तु—अप् तु—'आ' के स्थान पर 'स्थानेऽन्तरतमः' से ह्रस्वादेश (अ) हुआ, सु।

## (76) कृञः कतुः [1.76]

**पद०**—कृञः 5.1, कतुः 1.1

**सं०**—कृधातोः कतुप्रत्ययः स्यात्।

**व्याख्या**—कृञः पञ्चम्यन्त पद है। 'तस्मादित्युत्तरस्य' परिभाषा प्रवृत्त होती है। अर्थ—कृ धातु से उत्तर कतु प्रत्यय होता है। प्रत्यय के 'क्' की 'लशक्वतद्धिते' (पा० 1.3.6) से इत् सञ्ज्ञा है। 'तस्य लोपः' (पा० 1.3.9) से 'क्' का लोप होता है। 'अतु' शेष रहता है। कतु को कित् करने का प्रयोजन है कि आर्धधातुक लक्षण गुण का निषेध हो जाय।

**स्वा०द०वृ०**—'कृञ्' धातोः कतुः प्रत्ययो भवति। यः क्रियते यया करोति वेति **क्रतुः**, प्रज्ञा यज्ञो वा। कित्त्वाद् गुणाभावे यणादेशः।

**उदा०**—(1) क्रतुः (= यज्ञ, बुद्धि)—यः क्रियते। यया करोति। डुकृञ् करणे से 'कतु' प्रत्यय—कृ कतु—कृ अतु—गुणनिषेध, 'इको यणचि' से यण्—क् र् अतु सु।

## (77) एधिवह्योश्चतुः [1.77]

**पद०**—एधिवह्योः 6.2, चतुः 1.1
**सं०**—एध् वह्—इत्येताभ्यां धातुभ्यां चतुप्रत्ययः स्यात्।

**व्याख्या**—एधिवह्योः यह षष्ठ्यन्त पद है। इसे विभक्तिविपरिणाम के द्वारा पञ्चम्यन्त बना लिया जाता है। 'तस्मादित्युत्तरस्य' परिभाषा प्रवृत्त होती है। अर्थ—एध् तथा वह् धातु से चतु प्रत्यय होता है। प्रत्यय का 'च्' इत्सञ्ज्ञक है। 'च्' अनुबन्ध का प्रयोजन 'चितः' (पा० 6.1.163) के द्वारा अन्तोदात्त स्वर करना है। 'अतु' शेष रहता है।

**स्वा०द०वृ०**—एधते वर्द्धतेऽसौ **एधतुः**, पुरुषो वा। वहति भारमिति **वहतुः**, अनड्वान् वा। चित्करणमन्तोदात्तार्थम्।

**उदा०**—(1) एधतुः (= पुरुष, अग्नि)—एधते वर्धतेऽसौ। एध वृद्धौ से 'चतु'—एध् अतु सु।

(2) वहतुः (= बैल)—वहति भारम्। वह प्रापणे से 'चतु'—वह् अतु सु।

## (78) जीवेरातुः [1.78]

**पद०**—जीवेः 5.1, आतुः 1.1
**सं०**—जीव्धातोर् आतुप्रत्ययः स्यात्।

**व्याख्या**—जीव् धातु से 'आतु' प्रत्यय होता है।

**स्वा०द०वृ०**—जीव्यते येन यो वा जीवति स **जीवातुः**, जीवनम् औषधं वा।

**उदा०**—(1) जीवातुः (= जीवन, भोजन)—जीव्यते येन। जीव प्राणधारणे धातु से 'आतु'—जीव् आतु सु।

## (79) आतृकन् वृद्धिश्च [1.79]

**पद०**—आतृकन् 1.1, वृद्धिः 1.1, च—अव्य०।
**अनु०**—'जीवेरातुः' (उ०सू० 1.78) से 'जीवेः' का अनुवर्त्तन है।
**सं०**—जीव्धातोर् आतृकन् प्रत्ययः स्याद्, धातोश्च वृद्धिः स्यात्।

**व्याख्या**—अनुवृत्त 'जीवेः' पद की आवृत्ति की जाती है। प्रथम 'जीवेः' पद को पञ्चम्यन्त मानकर 'तस्मादित्युत्तरस्य' परिभाषा से जीव् से परे प्रत्यय होता है। द्वितीय 'जीवेः' पद को विभक्तिविपरिणाम के द्वारा षष्ठ्यन्त मानकर जीव् धातु के स्थान पर वृद्धि आदेश होता है। 'इको गुणवृद्धी' से जीव् धातु के इक् वर्ण (ई) के स्थान पर यह वृद्धि आदेश प्राप्त होकर 'स्थानेऽन्तरतमः' और 'वृद्धिरादैच्' के द्वारा 'ऐ' के रूप में होता है। अर्थ—जीव् धातु से परे आतृकन् प्रत्यय होता है और धातु (का जो इक् वर्ण उस) के स्थान पर वृद्धि आदेश होता है। आतृकन् प्रत्यय के 'न्' की 'हलन्त्यम्' से इत्सञ्ज्ञा होती है। न् अनुबन्ध का प्रयोजन 'ञ्नित्यादिर्नित्यम्' (पा० 6.1.196) से आद्युदात्त स्वर करना है।

**स्वा०द०वृ०**—'जीव'धातोरातृकन् प्रत्ययस्तस्मिन् सति वृद्धिश्च भवति। यो जीवति पूर्णावस्थापर्यन्तं स **जैवातृकः** आयुष्मान्, निशाकरो वा।

**उदा०**—(1) जैवातृकः (= आयुष्मान्, चन्द्रमा, कपूर, बेटा)—यो जीवति। जीव् आतृकन्—जीवातृक—वृद्धि—जैवातृक सु।

## (80) कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः स्त्रियाम् [1.80]

**पद०**—कृषिचमितनिधनिसर्जिखर्जिभ्यः 5.3, ऊः 1.1, स्त्रियाम् 7.1
**सं०**—कृष् चम् तन् धन् सर्ज् खर्ज्—इत्येतेभ्यो धातुभ्य ऊः स्यात् स्त्रीलिङ्गे वाच्ये।

**व्याख्या**—स्त्रियाम् अर्थात् स्त्रीलिङ्ग वाच्य हो तो। 'कृषिचमि·····भ्यः' पञ्चम्यन्त पद है। 'तस्मादित्युत्तरस्य' की प्रवृत्ति होती है। अर्थ—कृष्, चम्, तन्, धन्, सर्ज्, खर्ज्—इन धातुओं से परे 'ऊ' प्रत्यय होता है, यदि स्त्रीलिङ्ग वाच्य हो। भाव यह है कि सूत्रोक्त कृष् आदि धातुओं से 'ऊ' प्रत्यय करने पर निष्पन्न शब्द स्त्रीलिङ्ग में प्रयुक्त होता है।

**स्वा०द०वृ०**—कृष्यादिभ्य ऊः प्रत्ययः। कर्षत्याकर्षति पदार्थानिति **कर्षूः**, शुष्कगोमयः अग्निर्नदी वा। चमति भक्षयतीति **चमूः**, शत्रुभक्षिणी सेना वा। तनोति कार्याणि येन [ यया वा ] सा **तनूः**, शरीरं वा। दधाति धनमर्जयति [ येन ] स **धनूः**, शस्त्रं वा। सर्जति उपार्जति कार्याणीति **सर्जूः**, वैश्यो वा। खर्जति पीडयतीति **खर्जूः**, कण्डूर्वा।

**उदा०**—(1) कर्षूः (= सूखा गोबर, अग्नि, नदी)—कर्षति पदार्थान्। कृष विलेखने से प्रत्यय। कृष् ऊ—'आर्धधातुकं शेषः' से आर्धधातुक सञ्ज्ञा, 'पुगन्तलघूपधस्य च' से लघूपध गुण। कर्ष् ऊ सु।

(2) चमूः (= सेना)—चमति शत्रून् भक्षयति। चमु अदने। चम् ऊ—प्रातिपदिक सञ्ज्ञा, सु—चमूः—विभक्तिकार्य।

(3) तनूः (= शरीर)—तनोति कार्याणि यया सा। तनु विस्तारे इस धातु से प्रत्यय हुआ—तन् ऊ—प्रातिपदिक सञ्ज्ञा, सु, विभक्तिकार्य।

(4) धनूः (= शस्त्र)—दधाति धनम् अर्जयति (यया) सा। धन धान्ये धातु से प्रत्यय—धन् ऊ सु।

(5) सर्जूः (= वैश्य)—सर्जति उपार्जति कार्याणि। सृज विसर्गे। सृज् ऊ—आर्धधातुक सञ्ज्ञा, 'पुगन्तलघूपधस्य च' से लघूपध गुण, उरण् रपरः—सर्जू सु।

(6) खर्जूः (= खान)—खर्जति पीडयति। खर्ज पूजायाम्। खर्ज् ऊ सु।

## (81) मृजेर्गुणश्च [1.81]

**पद०**—मृजेः 5.1, गुणः 1.1, च—अव्य०।

**अनु०**—'कृषिचमि····स्त्रियाम्' (उ०सू० 1.80) से 'ऊः' का अनुवर्त्तन है।

**सं०**—मृज्धातोर् ऊप्रत्ययः स्याद् धातोश्च गुणादेशो भवति।

**व्याख्या**—'मृजेः' पद की आवृत्ति की जाती है। प्रथम मृजेः पद का अनुवृत्त 'ऊः' पद के साथ अन्वय होता है। द्वितीय मृजेः पद को विभक्तिविपरिणाम के द्वारा षष्ठ्यन्त मानकर इसका अन्वय 'गुणः' पद के साथ किया जाता है। अर्थ—मृज् धातु से परे 'ऊ' प्रत्यय होता है तथा धातु के स्थान पर गुण आदेश होता है। 'मृजेर्वृद्धिः' (पा० 7.2.114) से यहाँ वृद्धि आदेश प्राप्त था। इसके बाध के लिए प्रकृत में 'गुणः' का पाठ है।

**स्वा०द०वृ०**—मार्ष्टि शोधयतीति **मर्जूः**, शुद्धिर्वा। ऊप्रत्ययस्याकित्त्वान्नित्यापि प्राप्ता वृद्धिर्गुणेन बाध्यते।

**उदा०**—(1) मर्जूः (= शुद्धि, रजक)—मार्ष्टि शोधयति। मृजूष् शुद्धौ धातु से 'ऊ'—मृज् ऊ—प्राप्त वृद्धि को बाधकर गुण, उरण् रपरः—मर्ज् ऊ सु।

## (82) खडेर्डुट् वा [1.82]

**पद०**—खडेः 5.1, डुट् 1.1, वा—अव्य०।

**अनु०**—'कषि·····स्त्रियाम्' (उ०सू० 1.80) से 'ऊः' का अनुवर्त्तन है।

**सं०**—खड्धातोर् ऊप्रत्ययः स्यात्, प्रत्ययस्य 'डुट्' इत्यागमो विकल्पेन भवति। टित्त्वाद् आद्यवयवः।

**व्याख्या**—खड् धातु से परे ऊ प्रत्यय होता है तथा प्रत्यय को डुट् आगम विकल्प से होता है। डुट् के टकार की 'हलन्त्यम्' से इत्सञ्ज्ञा है। डकारस्थ उकार उच्चारणार्थ है। ड् शेष रहता है। 'आद्यन्तौ टकितौ' से प्रत्यय का आद्यवयव बनता है।

**स्वा०द०वृ०**—खडति भिनत्तीति **खड्डूः**, **खडूः**, बाहुजङ्घयोराभूषणं मृतशय्या वा।

**उदा०**—(1) खड्डूः (= मृतशय्या, एक आभूषण)—खडति भिनत्ति। खड भेदने धातु से प्रत्यय। खड् ऊ—डुट् आगम—खड् डुट् ऊ—अनुबन्धलोप—खड्डू सु।

(2) खडूः—डुट् आगम के अभाव पक्ष में।

## (83) वहेर्धश्च [1.83]

**पद०**—वहेः 5.1, धः 1.1, च—अव्य०।

**अनु०**—'कृषि·····स्त्रियाम्' (उ०सू० 1.80) से 'ऊः' का अनुवर्त्तन है।

**सं०**—वह्धातोर् ऊप्रत्ययः स्याद्, धातोश्च धकार अन्तादेशो भवति।

**व्याख्या**—वहेः पद की आवृत्ति की जाती है। प्रथम 'वहेः' को पञ्चम्यन्त मानकर वह् से परे प्रत्यय होता है। द्वितीय 'वहेः' पद को विभक्तिविपरिणाम से षष्ठ्यन्त मानकर धातु को 'ध' आदेश किया जाता है। धकारस्थ अकार उच्चारणार्थ है। 'हो ढः' से प्राप्त ढकार के बाध के लिए प्रकृत में धकार आदेश का विधान है। यह आदेश 'अलोऽन्त्यस्य' परिभाषा से धातु के अन्त्य अल् (ह्) के स्थान पर होता है। अर्थ—वह् धातु से परे 'ऊ' आदेश होता है तथा धातु को 'ध्' अन्तादेश होता है।

**स्वा०द०वृ०**—वहति सुखानि प्रापयतीति **वधूः**, नवोढा स्त्री वा।

**उदा०**—(1) वधूः (= बहू, पुत्रवधू)—वहति सुखानि प्रापयति। वह प्रापणे से प्रत्यय। वह् ऊ—अन्तादेश—वधू सु।

## (84) कषेश्छश्च [1.84]

**पद०**—कषे: 5.1, छ: 1.1, च—अव्य०।
**अनु०**—'कृषि····स्त्रियाम्' (उ०सू० 1.80) से 'ऊः' का अनुवर्त्तन है।
**सं०**—कष्धातोर् ऊप्रत्ययः स्याद्, धातोश्च छकाराऽन्तादेशो भवति।

**व्याख्या**—'कषेः' पद की आवृत्ति की जाती है। प्रथम 'कषेः' को पञ्चम्यन्त मानकर धातु से परे प्रत्यय होता है। द्वितीय 'कषेः' को विभक्तिविपरिणाम के द्वारा षष्ठ्यन्त मानकर धातु को आदेश किया जाता है। अलोऽन्त्य परिभाषा से छकार अन्त्य अल् (ष्) के स्थान पर होता है। छकारस्थ अकार उच्चारणार्थ है। अर्थ—कष् धातु से परे ऊ प्रत्यय होता है तथा धातु को 'छ्' अन्तादेश होता है।

**स्वा०द०वृ०**—कषति हिनस्ति दुःखयतीति **कच्छूः**, पामा वा। 'खाज' इति प्रसिद्धा। षकारस्य छकारः।

**उदा०**—(1) कच्छूः (= खुजली)—कषति हिनस्ति दुःखयति क्लिश्नाति। कष हिंसायाम्। कष् ऊ—अन्तादेश 'छ्'—क छ् ऊ्—'छे च' (पा० 6.1.73) से तुक् आगम—क तुक् छ् ऊ—अनुबन्धलोप। कच्छू सु।

## (85) णित्कशिपद्यर्तेः [1.85]

**पद०**—णित् 1.1, कशिपद्यर्तेः 5.1
**अनु०**—'कृषि····स्त्रियाम्' (उ०सू० 1.80) से 'ऊः' की अनुवृत्ति है।
**सं०**—कश् पद् ऋ—इत्येतेभ्यो धातुभ्य ऊप्रत्ययः स्यात्, स च णित्सञ्ज्ञः।

**व्याख्या**—अर्थ—कश्, पद् और ऋ—इन धातुओं से परे 'ऊ' प्रत्यय होता है तथा वह (प्रत्यय) णित् होता है। यह अतिदेश सूत्र है। णित्करण गुण-वृद्धि कार्य के लिए है।

**स्वा०द०वृ०**—कश्यादिभ्य ऊ णिद्भवति। कष्टे गच्छति शास्ति वेति **काशूः**, विकलधातुर्जनः शक्तिर्वा। पद्यन्ते गच्छन्ति यया सा **पादूः**, उपानहौ वा। ऋच्छति प्राप्नोति स **आरूः**, पिङ्गलो वा।

**उदा०**—(1) काशूः (= रोगी, प्रभा)—कष्टे गच्छति शास्ति। कश गति-शासनयोः से 'ऊ' प्रत्यय। कश् ऊ—णित् होने से 'अत उपधायाः' से उपधाभूत अत् के स्थान पर वृद्धि आदेश—काशू सु।

(2) पादूः (= जूता)—पद्यन्ते गच्छन्ति या सा। पद गतौ धातु से प्रत्यय। पद् ऊ—पूर्ववत् उपधा वृद्धि—पादू सु।

(3) आरूः (= पिंगल)—ऋच्छति प्राप्नोति सः । ऋ गतिप्रापणयोः से प्रत्यय । ऋ ऊ—'अचो ञ्णिति' से वृद्धि, 'उरण् रपरः' से रपरत्व—आर् ऊ सु ।

## (86) अणो डश्च [1.86]

**पद०**—अणः 5.1, डः—1.1, च—अव्य० ।

**अनु०**—'कृषि······स्त्रियाम्' (उ०सू० 1.80) से 'ऊः' की अनुवृत्ति है। 'णित्कशिपद्यर्त्तेः' (उ०सू० 1.85) से 'णित्' का अनुवर्त्तन है ।

**सं०**—अण्धातोर् ऊप्रत्ययः स्यात्, धातोश्च 'ड्' इत्यन्तादेशो भवति । प्रत्ययश्च णिद्वद् भवति ।

**व्याख्या**—'अणः' पद की आवृत्ति की जाती है। प्रथम 'अणः' पद को पञ्चम्यन्त मानकर धातु से 'ऊ' प्रत्यय होता है। द्वितीय 'अणः' पद को विभक्ति-विपरिणाम से षष्ठ्यन्त मानकर धातु को आदेश किया जाता है। डकारस्थ अकार उच्चारणार्थ है। अलोऽन्त्य परिभाषा से ड् आदेश धातु के अन्त्य अल् (ण्) के स्थान पर होता है। अर्थ—अण् धातु से परे 'ऊ' प्रत्यय होता है, धातु को 'ड्' अन्तादेश होता है तथा 'ऊ' प्रत्यय णिद्वत् होता है ।

**स्वा०द०वृ०**—अणति शब्दयतीति **आडूः**, जलगामिद्रव्यं वा । णस्य डः ।

**उदा०**—(1) आडूः (= नौका)—अणति शब्दायति । अण शब्दे धातु । अण् ऊ—'ड्' अन्तादेश । अड् ऊ—प्रत्यय के णिद्वत् होने से 'अत उपधायाः' से उपधा (अत्) को वृद्धि आदेश—आडू सु ।

## (87) [ नञि ] लम्बेर्नलोपश्च [1.87]

**पद०**—नञि 7.1, लम्बेः 5.1, नलोपः 1.1, च—अव्य० ।

**अनु०**—'कृषि······स्त्रियाम्' (उ०सू० 1.80) से 'ऊः' का तथा 'णित्कशिपद्यर्त्तेः' (उ०सू० 1.85) से 'णित्' का अनुवर्त्तन है ।

**सं०**—नञि उपपदे लम्ब्धातोर् ऊप्रत्ययः स्याद् धातोर्यो नकारस् तस्य लोपो भवति, प्रत्ययश्च णिद्वद् भवति ।

**व्याख्या**—नञि अर्थात् नञ् के उपपद रहते । 'लम्बेः' पद की पूर्ववत् आवृत्ति की जाती है। अर्थ—'नञ्' शब्द के उपपद रहते लम्ब् धातु से परे ऊ प्रत्यय होता है, ऊ प्रत्यय णित् होता है तथा धातु का जो नकार, उसका लोप होता है। लबि धातु का इकार इत् है। 'इदितो नुम् धातोः' से नुम् आगम होता है। ल न् ब्—'नश्चाऽपदान्तस्य झलि' से न् को 'अनुस्वार तथा अनुस्वारस्य ययि परसवर्णः' से परसवर्ण होकर लम् ब् यह स्थिति बनती है। प्रकृत सूत्र में उक्त 'नलोप' के द्वारा इसी मकार का लोप होता है।

**स्वा०द०वृ०**—ऊप्रत्यये लम्बधातोर्नलोपो भवति। न लम्बतेऽधो न स्रवति गच्छति सा **अलाबूः**, तुम्बी वा।

**उदा०**—(1) अलाबूः (= तूम्बी)—न लम्बतेऽधो न स्रवति गच्छति। नञ् उपपदपूर्वक लबि शब्दे धातु से ऊ हुआ—नञ् लम्ब् ऊ—हलन्त्यम्, तस्य लोपः से 'ञ्' का लोप, नुम्, अनुस्वार, परसवर्ण। न लम्ब् ऊ—'नलोपो नञः' से न् का लोप—अ लम्ब् ऊ—धातु के नकार का लोप—अ लब् ऊ—प्रत्यय के णिद्वत् होने से 'अत उपधायाः' से उपधा के स्थान पर वृद्धि आदेश—अलाब् ऊ सु।

## (88) के श्र एरङ् चाऽस्य [1.88]

**पद०**—के 7.1, श्रः 5.1, एरङ् 1.1, च—अव्य०, अस्य—6.1
**अनु०**—'कृषि····स्त्रियाम्' (उ०सू० 1.80) से 'ऊः' का अनुवर्त्तन है।
**सं०**—शृ इत्येतस्माद् धातोर् ऊप्रत्ययः स्यात्, धातोः स्थाने एरङ् आदेशो भवति, 'क' इत्युपपदे सति।

**व्याख्या**—'श्रः' पद की पूर्ववत् आवृत्ति की जाती है। अर्थ—यदि 'क' शब्द उपपद हो तो शृ धातु से परे ऊ प्रत्यय होता है तथा धातु के स्थान पर एरङ् आदेश होता है। एरङ् का ङ् इत् है। प्रथम 'अलोऽन्त्यस्य' के द्वारा धातु के अन्त्य अल् के स्थान पर एरङ् प्राप्त हुआ। इसे बाधकर 'अनेकाल् शित् सर्वस्य' (पा० 1.1.54) से समग्र स्थानी के स्थान पर आदेश प्राप्त हुआ। इसे बाधकर 'ङिच्च' (पा० 1.1.53) के द्वारा धातु के अन्त्य अल् (ॠ) के स्थान पर होता है। रेफस्थ अकार उच्चारणार्थ है।

**स्वा०द०वृ०**—ककारोपपदात् 'शृ'धातोरूप्रत्ययस्तस्मिन् प्रकृतेररङादेशः। कं शास्ति स **कशेरूः**, तृणकन्दं वा; बहुलवचनादूप्रत्ययस्य ह्रस्वे कृते **कशेरुः** इति ह्रस्वान्तोऽपि दृश्यते।

**उदा०**—(1) कशेरूः (= रीढ की हड्डी, तृणकन्द)—कं शास्ति। कं शृणाति। शृ हिंसायाम्। क शृ ऊ—क श् एर् ऊ—कशेरू सु। बहुलवचनात् ह्रस्वान्त 'कशेरु' शब्द भी प्राप्त होता है।

## (89) त्रो दुट् च [1.89]

**पद०**—त्रः 5.1, दुट् 1.1, च—अव्य०।
**अनु०**—'कृषि····स्त्रियाम्' (उ०सू० 1.80) से 'ऊः' का अनुवर्त्तन है।
**सं०**—तृधातोर् ऊप्रत्ययो भवति, प्रत्ययस्य दुट् आगमो भवति।

**व्याख्या**—त्रः यह पञ्चम्यन्त पद है। दुट् आगम प्रत्यय को होता है। ट्

इत्सञ्ज्ञक है। उकार उच्चारणार्थ है। शेष द् बचता है। टित् होने से 'आद्यन्तौ टकितौ' (पा० 1.1.45) से प्रत्यय का आदि अवयव बनता है। अर्थ—तॄ धातु से परे 'ऊ' प्रत्यय होता है तथा प्रत्ययं को दुट् आगम होता है।

**स्वा०द०वृ०**—तरति येन यया वा सा **तर्दूः**, दारुहस्तः पुरुषो यष्टिर्वा। प्रत्ययस्य दुडागमः।

**उदा०**—(1) तर्दूः (= हाथ में दण्ड लिये हुए पुरुष, लाठी)—तरति येन (यया वा)। तॄ प्लवनसन्तरणयोः धातु से प्रत्यय। तॄ ऊ—'सार्वधातुकार्धधातुकयोः' से गुण, 'उरण् रपरः' से रपरत्व। तर् ऊ—दुट् आगम। तर् दुट् ऊ—अनुबन्धलोप, सु। दशपादी में 'द्रुट्' प्रत्यय कहा है। इसके अनुसार 'तॄ द्रुट् ऊ' इस दशा में गुण आदेश, अनुबन्धलोप होकर—तर् द्र् ऊ = तर्द्रू शब्द निष्पन्न होता है। कुछ ग्रन्थकार डुट् आगम मानते हैं। उनके अनुसार 'तर्डू' शब्द बनता है। कुछ विद्वान् धातु को दुक् आगम करते हैं। तॄ दुक् ऊ इस स्थिति में आगम धातु का अवयव बनता है। तृद् ऊ—यहाँ उपधा में लघुसञ्ज्ञक वर्ण के प्राप्त न रहने से लघूपध गुण प्राप्त नहीं होता है, अतः दुक् आगम करना अनुचित है।

## (90) दरिद्रातेर्यालोपश्च [1.90]

**पद०**—दरिद्रातेः 5.1, यालोपः 1.1, च—अव्य०।

**अनु०**—'कृषि····स्त्रियाम्' (उ०सू० 1.80) से 'ऊः' की अनुवृत्ति है।

**सं०**—दरिद्राधातोर् ऊ प्रत्ययः स्यात् धातोश्च 'या' इत्यस्य लोपो भवति। इश्च आश्च इति या।

**व्याख्या**—पूर्ववत् दरिद्रातेः पद की आवृत्ति की जाती है। इ + आ इस स्थिति में यण् आदेश होकर 'या' बनता है। अर्थ—दरिद्रा धातु से परे ऊ प्रत्यय होता है तथा धातु के इकार व आकार का लोप होता है।

**स्वा०द०वृ०**—'दरिद्रा'धातोरूप्रत्यये 'इ' 'आ' इत्येतयोर्वर्णयोर्लोपः। दरिद्राति दुर्गतिं करोतीति दर्द्रूः, कुष्ठभेदो वा। **मृगय्वादित्वात्** (उ० 1.37) 'रि' 'आ' इत्यनयोर्लोपे **दद्रुः** इत्यपि सिद्धम्। अत्र सूत्रेऽपि 'रि' 'आ' इत्येतयोर्लोपे **दद्रूरि**ति भवति।

**उदा०**—(1) दर्द्रूः (= एक कोढ का प्रकार, खुजली)—दरिद्राति दुर्गतिं करोति। दरिद्रा दुर्गतौ धातु से 'ऊ' प्रत्यय। दरिद्रा ऊ—इकार तथा आकार का लोप—द र् द् र् ऊ—दर्द्रू सु।

पुरोडाशो वा। दृप्यति हृष्यति मुह्यति वा स **दृप्रः,** बलवान् वा। वन्दतेऽभिवदति स्तौति वा स **वन्द्रः**, सत्कर्त्ता वा। उनत्ति क्लिद्यति स **उद्रः**, जलचरो वा। सम्यगुनत्तीति **समुद्रः। अनिदिताम्०** [ 6.4.24 ] इति नलोपः। श्वेतते वर्णविशिष्टो भवतीति **श्वित्रम्,** कुष्ठभेदो वा। वर्त्तते सदैवाऽसौ **वृत्रः**, मेघः शत्रुस्तमः पर्वतश्चक्रं वा। अजति गच्छति शत्रून् वा प्रक्षिपति स **वीरः**, सुभटः श्रेष्ठश्चतुष्पथं वा; **वीरा** क्षीरकाकोली, पतिपुत्रवती स्त्री मदिरा मधुपर्णिकौषधिर्वा। नयति शरीरमिति **नीरम्,** जलं वा। पद्यते गच्छन्त्यस्मिन् वा स **पद्रः**, ग्रामः संवेशः स्थानं वा। माद्यतीति **मद्रः**, हर्षो देशभेदो वा। मोदन्ते हृष्यन्ति यया सा **मुद्रा**, यन्त्रिता सुवर्णादिधातुमया वा। यः खिद्यते येन वा दीनो भवतीति **स खिद्रः**, दरिद्रो रोगो वा। छिद्यते तत्तत् **छिद्रम्,** विवरं वा। भिनत्ति येन तद् **भिद्रम्,** वज्रो वा। मन्दते स्तौतीति **मन्द्रः**, गम्भीरध्वनिर्वा। चन्दति हर्षयति दीपयति वा स **चन्द्रः**, कर्पूरश्चन्द्रमा वा। दहति भस्मीकरोतीति **दह्रः**, दावाग्निर्वा। दस्यति रोगानुपक्षयतीति **दस्रः**, वैद्यश्चौरो वा। यो दभ्नोति दम्भं करोति स **दभ्रः**, क्षुद्रो जनः समुद्रो वा। वसतीति **उस्रः**, रश्मिर्वा, **उस्रा** गौः। वाश्यते शब्दयतीति **वाश्रम्,** पुरीषं दिवसो मन्दिरं चतुष्पथं वा। शेतेऽसौ **शीरः**, महासर्पो वा। हसतीति **हस्रः**, मूर्खो वा। सेधति गच्छति सिध्यति वा स **सिध्रः**, साधुर्वृक्षजातिर्वा। कुत्सिताः सिध्रा वृक्षाः **सिध्रकाः**, तासां वनं **'सिध्रकावणम्', वनं पुरगामिश्रकासिध्रका०** [ 8.4.4 ] इति सूत्रेण णत्वम्। शोभते दीप्यते तत् **शुभ्रम्,** रुचिरं शुक्लं पाण्डुरं वा।

**बाहुलकात्**—मेशति शब्दतीति **मिश्रः**, संयोगो वा। पुण्डयति खण्डयतीति **पुण्ड्रः**, दुष्टो वा। सिनोति बध्नाति मांसरुधिरादिकमिति **सिरा**, नाडी वा। मुस्यति खण्डयतीति **मुस्रम्,** नेत्रोदकं वा। अस्यतीति **अस्रम्,** रुधिरं वा; अस्रं पिबतीति **अस्रपो** दंशः।

**उदा०**—(1) स्फारम् (= सोने का मैल)—यः स्फायते वर्द्धतेऽसौ। स्फायी वृद्धौ। स्फाय् रक्—'लोपो व्योर्वलि' (पा० 6.1.64) से य् का लोप—स्फा र—सु।

(2) तक्रम् (= छाछ)—तनक्ति सङ्कोचयति। तञ्चू सङ्कोचने। तञ्च् रक्—'अनिदितां हल उपधाया०' (पा० 6.4.24) से अनुनासिकलोप—तच् र—'चोः कुः' से कुत्व—तक् र सु। न्यङ्क्वादित्वादपि कुत्वम्।

(3) वक्रः (= कुटिल)—वञ्चति प्रलम्भते। वञ्चु प्रलम्भने। वञ्च् रक्–'अनिदितां हल उपधाया०' से अनुनासिकलोप—वच् र—'चोः कुः' से कुत्व (क्)—वक्र सु।

(4) शक्रः (= इन्द्र)—शक्नोति यः सः। शक्लृ शक्तौ। शक् रक्—सु।

(5) क्षिप्रम् (= शीघ्र)—क्षिप्यते प्रेर्यते तत्। क्षिप प्रेरणे। क्षिप् रक्—सु, विभक्तिकार्य।

(6) क्षुद्रः (= अधम)—क्षुणत्ति सम्पिनष्टि। क्षुदिर् सम्पेषणे—क्षुद् रक् सु। क्षुद्रा = वेश्या। स्त्रियाम्, अजाद्यतष्टाप्।

(7) सृप्रः (= चन्द्रमा)—सर्पति गच्छति। सृप्लृ गतौ। सृप् रक् सु।

(8) तृप्रः (= पुरोडाश)—तृप्यति यो (येन वा)। तृप प्रीणने। तृप् रक्—सु।

(9) दृप्रः (= गर्वीला)—दृप्यति हृष्यति मुह्यति। दृप हर्षमोहनयोः। दृप् रक्—सु, विभक्तिकार्य।

(10) वन्द्रः (= समृद्धि)—वन्दते स्तौति। वदि अभिवादनस्तुत्योः। व नुम् द्—'इदितो नुम् धातोः' से नुम्, अनुस्वार, परसवर्ण—वन्द् रक् सु।

(11) उद्रः (= जलचर, सागर)—उनत्ति क्लिद्यति। उन्दी क्लेदने। उन्द् रक्—'अनिदितां हल उपधाया०' से अनुनासिकलोप। सम्यग् उनत्तीति—समुद्रः।

(12) श्वित्रम् (= कोढ)—श्वेतते वर्णविशेषो भवति। श्विता वर्णे। श्वित् रक्—सु, विभक्तिकार्य।

(13) वृत्रः (= मेघ, रिपु)—वर्त्तते। वृतु वर्त्तने। वृत् रक् सु।

(14) वीरः (= वीर)—अजति गच्छति शत्रून् प्रक्षिपति। अज गतिक्षेपणयोः। अज् रक् 'अजेर्व्यघञपोः' (पा० 2.4.55) से 'वी' आदेश, सु।

(15) नीरम् (= जल)—नयति शरीरम्। णीञ् प्रापणे 'णो नः' से नकार। नी रक् सु—विभक्तिकार्य।

(16) पद्रः (= गाँव)—पद्यते गच्छत्यस्मिन्। पद गतौ। पद् रक् सु।

(17) मद्रः (= हर्ष)—माद्यतीति। मदी हर्षे। मद् रक् सु।

(18) मुद्रा (= रुपया आदि)—मोदन्ते यया सा। मुद हर्षे। मुद् रक्—टाप्, अजाद्यतष्टाप्, सु, 'हल्ङ्याब्भ्यो०' से अपृक्त सकार का लोप।

(19) खिद्रः (= रोग, रंक)—खिद्यते येन। खिद दैन्ये। खिद् रक्—पुगन्तलघूपधस्य च, क्ङिति च, सु।

(20) छिद्रम् (= छेद)—छिद्यते तत्। छिदिर् द्वैधीकरणे। छिद् रक्—प्राप्त लघूपध गुण का निषेध, सु।

(21) भिद्रम् (= वज्र)—भिनत्ति येन। भिदिर् विदारणे। भिद् रक्—लघूपध गुण का निषेध, सु।

(22) मन्द्रः (= गहरी ध्वनि)—मन्दते स्तौति। मदि स्तुत्यादिषु। मन् द्—'इदितो नुम् धातोः' से नुम्, अनुस्वार, परसवर्ण, रक्, सु।

(23) चन्द्रः (= चन्द्रमा)—चन्दति हर्षयति। चदि आह्लादने दीप्तौ च। नुम् पूर्ववत्। चन्द्र सु—विभक्तिकार्य।

(24) दह्रः (= अग्नि, जंगल की आग)—दहतीति । दह भस्मीकरणे । दह् रक् सु ।

(25) दस्रः (= गधा, चौर, वैद्य)—दस्यति रोगान् उपक्षयति । दसु उपक्षये । दस् रक्—सु, विभक्तिकार्य ।

(26) दभ्रः (= सागर, पापी पुरुष)—यो दभ्नोति । दम्भं करोति । दम्भु दम्भने । दम्भ् रक्—'अनिदितां हल उपधा०' से अनुनासिकलोप, सु ।

(27) उस्रः (= किरण, बैल, देव)—वसतीति । वस निवासे । वस् रक्—सु ।

(28) उह्रः (= अनड्वान्)—दशपादी में 'वह्' धातु का भी पाठ है । वहतीति उह्रः ।

(29) वाश्रः (= पुरीष, दिन)—वाश्यते शब्दयति । वाशृ शब्दे । वाश् रक्—सु ।

(30) शीरः (= अजगर)—शेतेऽसौ ।

(31) हस्रः (= मूर्ख)—हसतीति । हसे हसने । हस् रक् सु ।

(32) सिध्रः (= सज्जन, एक वृक्ष)—सेधति गच्छति । सिध्यति । षिध गत्याम् । 'धात्वादेः षः सः' से सकार ।

(33) शुभ्रम् (= सुन्दर)—शोभते दीप्यते । शुभ दीप्तौ । शुभ् रक् सु ।

(34) मिश्रः (= संयोग)—बाहुलकात् प्रत्यय । मेशति शब्दति । मिश् रक्—सु ।

(35) पुण्ड्रः (= दुष्ट)—पुण्डति खण्डयति । पुण्ड् रक् ।

(36) सिरा (= नाड़ी)—सिनोति बध्नाति मांसरुधिरादिकम् ।

(37) मुस्रम् (= आँसू)—मुस्यति खण्डयति । मुस् रक् ।

(38) अस्रम् (= रक्त) अस्यतीति । अस् रक् ।

(39) अस्रपः (= मच्छर)—अस्रं पिबति । अस्र पा क—लशक्वतद्धिते, आतो लोप इटि च, सु ।

## (173) चकिरम्योरुच्चोपधायाः [2.14]

**पद०**—चकिरम्योः 6.2, उत् 1.1, च—अव्य०, उपधायाः 6.2.1

**अनु०**—'स्फायि····रक्' (उ०सू० 2.13) से 'रक्' का अनुवर्त्तन है ।

**सं०**—चक् रम् इत्येताभ्यां धातुभ्यां रक्प्रत्ययः स्याद्, धातोश्चोपधायाः स्थाने 'उत्' इत्यादेशो भवति ।

**व्याख्या**—'चकिरम्योः' षष्ठ्यन्त पद है । इसका 'उपधायाः' के साथ अन्वय

किया जाता है। 'अलोऽन्त्यात् पूर्व उपधा' से उपधासञ्ज्ञा कही है। उत् = ह्रस्व उकार। 'चकिरम्योः' पद को विभक्तिविपरिणाम के द्वारा पञ्चम्यन्त (यथा—चकिरमिभ्याम्) बना लिया जाता है। तब धातु से परे प्रत्यय किया जाता है। अर्थ—चक् और रम् धातुओं से परे रक् प्रत्यय होता है और धातु की उपधा में स्थित वर्ण के स्थान पर ह्रस्व उकार आदेश होता है। नारायणभट्ट उपधा के स्थान पर ह्रस्व अकार आदेश स्वीकार करते हैं। द्रष्टव्य—चकिरम्योरच्चोपधायाः। परन्तु यह पाठ युक्त नहीं कहा जा सकता। यदि आचार्य को इन धातुओं की उपधा के स्थान ह्रस्व अकार आदेश इष्ट होता तो वे इन धातुओं का पाठ 'स्फायि' आदि धातुओं के साथ कर देते।

**स्वा०द०वृ०**—चकते तृप्यति प्रतिहन्यते वा स **चुक्रः**, अम्लम् अम्लवेत-समित्यादि। रमन्तेऽस्मिन् स **रुम्रः**, अरुणः शोभनो वा।

**उदा०**—(1) चुक्रम् (= अम्ल)—चकते तृप्यति प्रतिहन्यते। चक तृप्तौ प्रतिघाते च। चक् रक्—उकार आदेश—चुक् र सु।

(2) रुम्रः (= अरुण)—रमन्तेऽस्मिन्। रमु क्रीडायाम्। रम् → र् उम् रक् सु।

## (174) वौ कसेः [2.15]

**पद०**—वौ 7.1, कसेः 5.1

**अनु०**—'स्फायि····रक्' (उ०सू० 2.13) से 'रक्' का तथा 'चकिरम्योरुच्चोपधायाः' (उ०सू० 2.14) से 'उत्, उपधायाः' का अनुवर्त्तन है।

**सं०**—'वि'शब्दे उपपदे कस्धातो रक् प्रत्ययः स्याद् धातोश्चोपधायाः स्थाने 'उत्' इत्यादेशो भवति।

**व्याख्या**—'वि' शब्द के उपपद रहते कस् धातु से परे रक् प्रत्यय होता है तथा धातु की उपधा (में स्थित अल्) के स्थान पर ह्रस्व उकार आदेश होता है।

**स्वा०द०वृ०**—विकसति विशेषतया गच्छतीति **विकुस्रः**, चन्द्रमा वा। [ उच्चोपधाया इत्यनुवर्तमाने ] 'कस' धातोरुपधाया उत्त्वम्।

**उदा०**—(1) विकुस्रः (= चन्द्रमा)—विकसति। वि कस गतौ रक्—विकुस् र सु।

## (175) अमितम्योर्दीर्घश्च [2.16]

**पद०**—अमितम्योः 6.2, दीर्घः 1.1, च—अव्य०।

**अनु०**—'स्फायि····रक्' (उ०सू० 2.13) से 'रक्' का अनुवर्त्तन होता है।

**सं०**—अम् तम् इत्येताभ्यां धातुभ्यां रक्प्रत्ययः स्याद् धातोश्च दीर्घादेशो भवति।

**व्याख्या**—'अमितम्योः' षष्ठ्यन्त पद है। इसका अन्वय 'दीर्घः' पद के साथ होता है। विभक्तिविपरिणाम से इसे पञ्चम्यन्त बना लिया जाता है (यथा—अमितमिभ्याम्)। तब धातु से परे प्रत्यय होता है। अर्थ—अम् और तम्—इन धातुओं से परे रक् प्रत्यय होता है तथा धातु के स्थान पर दीर्घ आदेश होता है। ह्रस्व दीर्घ आदि सञ्ज्ञाएँ अच् वर्णों की हुआ करती है। अत; यह दीर्घ आदेश धातु में स्थित अच् वर्ण (अकार) को होता है। 'स्थानेऽन्तरतमः' से अकार के स्थान पर आकार दीर्घ आदेश होता है।

**स्वा०द०वृ०**—अम्यते सम्भज्यते सेव्यते तत् **आम्रम्**, चूतो वा। ताम्यति काङ्क्षतीति **ताम्रम्**, धातुभेदो रक्तवर्णो वा।

**उदा०**—(1) आम्रम् (= आम)—अम्यते सम्भज्यते। अम गत्यादिषु। अम् रक्—दीर्घ आदेश—आम् र सु—अतोऽम्।

(2) ताम्रम् (= ताम्बा)—ताम्यति काङ्क्षति। तमु काङ्क्षायाम्। तम् → ताम् रक् सु।

## (176) निन्देर्नलोपश्च [2.17]

**पद०**—निन्देः 5.1, नलोपः 1.1, च—अव्य०।

**अनु०**—'स्फायि·····रक्' (उ०सू० 2.13) से 'रक्' का अनुवर्त्तन है।

**सं०**—निन्द्धातो रक् प्रत्ययः स्याद् धातोश्च नकारलोपो भवति।

**व्याख्या**—'निन्देः' पद की आवृत्ति की जाती है। प्रथम 'निन्देः' पद को पञ्चम्यन्त मानकर धातु से प्रत्यय किया जाता है। द्वितीय 'निन्देः' पद को विभक्तिविपरिणाम से षष्ठ्यन्त मानकर इसका अन्वय 'नलोपः' पद के साथ किया जाता है। अर्थ—निन्द् धातु से परे रक् प्रत्यय होता है तथा धातु के नकार का लोप होता है। धातुपाठ में णिदि धातु णादि तथा इदित् है। 'णो नः' (पा० 6.1.64) से णकार को नकार होता है। निदि—'इदितो नुम् धातोः' (पा० 7.1.58) से नुम् आगम होकर 'निन्द्' ऐसी स्थिति में नुम् लक्षण नकार का लोप हुआ करता है।

**स्वा०द०वृ०**—या निन्दति यया वा सा **निद्रा**, शयनं वा।

**उदा०**—(1) निद्रा (= नींद)—निन्दति या (यया वा)। णिदि कुत्सायाम्। निन्द् रक्—नकारलोप। निद्र टाप्—स्त्रियाम्, अजाद्यतष्टाप्, अकः सवर्णे दीर्घः। निद्रा सु—'हल्ङ्याब्भ्यो० से अपृक्त सकार का लोप।

## (177) अर्देर्दीर्घश्च [2.18]

**पद०**—अर्देः 51, दीर्घः 1.1, च—अव्य०।

**अनु०**—'स्फायि···रक्' (उ०सू० 2.13) से 'रक्' का अनुवर्त्तन है।

**सं०**—अर्द्धातो रक्प्रत्ययः स्याद्, धातोश्च योऽच् तस्य स्थाने दीर्घादेशो भवति।

**व्याख्या**—'अर्देः' पद की पूर्ववत् आवृत्ति करके सूत्रार्थ किया जाता है। अर्थ—अर्द् धातु से परे रक् प्रत्यय होता है तथा धातु का जो अच् वर्ण, उसके स्थान पर दीर्घ आदेश होता है।

**स्वा०द०वृ०**—अर्दति गच्छति याचते वा तत् **आर्द्रम्,** सरसद्रव्यम्, **आर्द्रा** नक्षत्रं वा।

**उदा०**—(1) आर्द्रम् (= गीला)—अर्दति गच्छति याचते। अर्द गतौ याचने च। आर्द्र सु—अतोऽम्।

## (178) शुचेर्दश्च [2.19]

**पद०**—शुचेः 5.1, दः 1.1, च—अव्य०।

**अनु०**—'स्फायि····रक्' (उ०सू० 2.13) से 'रक्' का तथा 'अर्देर्दीर्घश्च' (उ०सू० 2.18) से 'दीर्घः' का अनुवर्त्तन है।

**सं०**—शुच् इत्येतस्माद् धातो रक्प्रत्ययः स्याद्, धातोश्च योऽच् तस्य स्थाने दीर्घादेशः स्याद्, धातोश्च 'द' इत्यन्तादेशः स्यात्।

**व्याख्या**—'शुचेः' पद की पूर्ववत् आवृत्ति करके सूत्रार्थ किया जाता है। अर्थ—शुच् धातु से परे रक् प्रत्यय होता है, धातु में स्थित अच् वर्ण के स्थान पर दीर्घ आदेश होता है तथा धातु के अन्त्य अल् के स्थान पर दकार आदेश होता है। दकारस्थ अकार उच्चारणार्थ है। 'अलोऽन्त्यस्य' से धातु के अन्त्य अल् (चकार) के स्थान पर दकार आदेश होता है।

**स्वा०द०वृ०**—दीर्घश्चानुवर्त्तते। शोचतीति **शूद्रः,** सेवको वा; पुंयोगे शूद्रस्य स्त्री **'शूद्री', 'शूद्रा'** तज्जातिर्वा।

**उदा०**—(1) शूद्रः (= शूद्र)—शोचतीति। शुच् → शुद् अन्तादेश—शूद् रक्—दीर्घ आदेश—शूद्र सु।

## (179) दुरीणो लोपश्च [2.20]

**पद०**—दुरि 7.1, इणः 5.1, लोपः 1.1, च—अव्य०।

**अनु०**—'स्फायि···रक्' (उ०सू० 2.13) से 'रक्' का अनुवर्त्तन है।

**सं०**—दुर् इत्युपपद 'इ' इत्येतस्माद् धातो रक्प्रत्ययः स्याद्, धातोश्च लोपः स्यात्।

**व्याख्या**—'इणः' पद का पूर्ववत् आवर्त्तन करके सूत्रार्थ किया जाता है। अर्थ—दुर् शब्द के उपपद रहते इण् धातु से पर रक् प्रत्यय होता है तथा धातु का लोप होता है।

**स्वा०द०वृ०**—दुरुपपदात् 'इण्'धातो रक् धातोश्च लोपः। दुःखेनेयते प्राप्यते तद् **दूरम्**, विप्रकृष्टं वा।

**उदा०**—(1) दूरम् (= दूर)—दुःखेनेयते प्राप्यते। दुर् इण् गतौ। दुर् इ रक्—धातु का लोप—दु र् र—'रो रि' से प्रथम रेफ का लोप—दुर—'ढ्रलोपे पूर्वस्य दीर्घोऽणः' से दीर्घ आदेश—दूर सु—अतोऽम्।

## (180) कृतेश्छः क्रू च [2.21]

**पद०**—कृतेः 5.1, छः 1.1, क्रू 1.1, च—अव्यं०।

**अनु०**—'स्फायि····रक्' (उ०सू० 2.13) से 'रक्' का अनुवर्त्तन है।

**सं०**—'कृत्'धातो रक्प्रत्ययः स्याद् धातोश्च छकारोऽन्तादेशो भवति। पक्षे 'क्रू' इति सर्वादेशः।

**व्याख्या**—कृत् धातु से परे रक् प्रत्यय होता है तथा धातु को छकार अन्तादेश होता है। 'अलोऽन्त्यस्य' से धातु के अन्त्य अल् (तकार) के स्थान पर छकार आदेश होता है। छकारस्थ अकार उच्चारणार्थ है। धातु से रक् प्रत्यय और धातु को 'क्रू' आदेश होता है।

**स्वा०द०वृ०**—'कृत'धातोरन्त्यस्य छः, सर्वस्य च क्रू इत्येतावादेशौ रक् च। कृन्तति छिनत्तीति **कृच्छ्रः, क्रूरः** च, कठिनं दुःखं खलो वा।

**उदा०**—(1) कृच्छ्रम् (= कठिन)—कृन्तति छिनत्ति। कृती छेदने। कृत् रक्—अन्तादेश—कृछ् र—'छे च' से तुक् आगम—कृ त् छ् र—'स्तोः श्चुना श्चुः' से चकार आदेश—कृच्छ्र सु—अतोऽम्।

(2) क्रूरः (= कठिन)—कृत् रक्—धातु के स्थान पर 'क्रू' आदेश। 'अनेकाल् शित् सर्वस्य' से सम्पूर्ण स्थानी (कृत्) के स्थान पर आदेश होता है—क्रूर सु।

**विशेष**—दशपाद्युणादि वृत्तिकार 'छ' अन्तादेश के स्थान पर धातु को 'छक्' आगम करते हैं। द्रष्टव्य—'कृतेश्छक् क्रू च' (द०वृ० 8.38)—कृतेर् धातो रक्प्रत्ययो भवति छक् क्रू चाऽऽगमाऽऽदेशौ भवतः। दशपादी के अनुसार कृत् धातु से छक् आगम होता है। तब तुक् आगम की आवश्यकता भी न पड़ेगी। कृत् छ रक्—'आद्यन्तौ

टकितौ' से धातु का अन्ताऽवयव बनता है। श्चुत्व होकर 'कृच्छ्र' बनता है। पक्ष में धातु को 'क्रू' सर्वादेश होकर 'क्रूर' शब्द बनता है।

## (181) रोदेर्णिलुक् च [2.22]

**पद०**—रोदेः 5.1, णिलुक् 1.1, च—अव्य०।

**अनु०**—'स्फायि.....रक्' (उ०सू० 2.13) से 'रक्' का अनुवर्त्तन होता है।

**सं०**—'रोदि' इत्येतस्माद् णिच्प्रत्ययान्ताद् रुद्धातो रक्प्रत्ययः स्यात्, णिच् प्रत्ययस्य च लुक् स्यात्।

**व्याख्या**—'रोदेः' पद की आवृत्ति की जाती है। अर्थ—णिच् प्रत्ययान्त रोदि धातु से परे रक् प्रत्यय होता है तथा णिच् प्रत्यय का लुक् होता है।

**स्वा०द०वृ०**—पापिनो रोदयतीति **रुद्रः**, ईश्वरः। **रुद्राः** प्राणादयो दश जीवश्च।

**उदा०**—(1) रुद्रः (= शिव)—पापिनो रोदयति। रुदिर् अश्रुविमोचने। रुद् णिच्—'हेतुमति च' (पा० 3.1.26) से णिच् हुआ, अनुबन्धलोप—रुद् इ—रक् प्रत्यय। रुद् र—णिच् का लुक्। 'प्रत्ययस्य लुक्श्लुलुपः' से प्रत्यय की लुक् सञ्ज्ञा। 'प्रत्ययलोपे प्रत्ययलक्षणम्' से णिच् प्रत्यय को मानकर 'पुगन्तलघूपधस्य च' से लघूपध गुण प्राप्त हुआ। 'न लुमताऽङ्गस्य' से प्रत्ययलक्षण गुण का निषेध, सु।

## (182) बहुलमन्यत्राऽपि सञ्ज्ञाछन्दसोः [2.23]

**पद०**—बहुलम् 2.1, अन्यत्र—अव्य०, अपि—अव्य०, सञ्ज्ञाछन्दसोः 7.2

**अनु०**—'स्फायि.....रक्' (उ०सू० 2.13) से 'रक्' का अनुवर्त्तन है।

**सं०**—सञ्ज्ञायां छन्दोविषये च (पूर्वोक्तेभ्यः) अन्येभ्योऽपि धातुभ्यो रक्प्रत्ययो बहुलतया स्यात्।

**व्याख्या**—सञ्ज्ञा में तथा वेद के विषय में पूर्वोक्त धातुओं के अतिरिक्त अन्य धातुओं से भी रक् प्रत्यय बहुलता से होता है।

**स्वा०द०वृ०**—बहुलम् अन्यत्रापि धात्वन्तरे संज्ञाछन्दसोः सामान्यप्रत्ययादौ च णेर्लुक्। पाशं बन्धनं धारयतीति **पाशधरः, शूलधरः, चक्रधरः, वज्रधरः, शक्तिधरः** वा कुमारः। **उदकधरः** मेघः,**दण्डधरः** राजा। अत्र सर्वत्राचि प्रत्यये 'धृ'धातोः परस्य णेर्लुक्। [ छन्दसि—**वर्धन्तु त्वा सुष्टुतयो गिरो मे** (ऋ. 7.99.7)—'वर्धयन्तु' इति प्राप्ते। **'अग्ने शर्ध महते सौभगाय'** (ऋ० 5.28.3)—'शर्धय' इति प्राप्ते। बहुलवचनादसंज्ञाछन्दसोरपि णेर्लुग् भवति।] पर्णानि शोषयति मोचयति रोहयति वा स

**पर्णशुट्, पर्णमुक्, पर्णरुट्** इति ण्यन्तात् 'शुष'धातोः क्विप् णेर्लुक्। [एवं मुचरुहधातुभ्यामपि] जश्त्वकुत्वादि कार्यम्।

**वान्ति पर्णशुषो वाता वान्ति पर्णमुचोऽपरे।**
**ततः पर्णरुहा वान्ति ततो देवः प्रवर्षति॥**

**उदा०**—(1) पाशधर: (= शिकारी)—पाशं बन्धनं धारयति। पाश धृ णिच् रक्—णिच् का लुक्। पांश धर् रक्—रेफलोप, सु। अण् को दीर्घ आदेश का अभाव।

(2) उदकधर: (= बादल)—पूर्ववत्। (3) दण्डधर: (= राजा)।

(4) पर्णशुट् (= पत्तों को सुखा डालने वाला) पर्णानि शोषयति—पर्ण शुष् णिच् क्विप्—बाहुलकात् णिच् का लुक्। पर्णशुष्—क्विप् का सर्वापहार लोप (द्रष्टव्य—हलन्त्यम्, उपदेशेऽजनुनासिक इत्, लशक्वत०, वेरपृक्तस्य, अपृक्त एकाल् प्रत्यय:)—पर्णशुष् सु—अपृक्त सकार का लोप, प्रत्ययलक्षण से पदसञ्ज्ञा, 'झलां जशोऽन्ते' से षकार को डकार। 'वाऽवसाने' से वैकल्पिक चर्त्व।

(5) पर्णमुक्—पर्णमुच् णिच् क्विप्—पूर्ववत्। 'चो: कु:' से कुत्व हुआ।

(6) पर्णरुट्—पर्णरुह् णिच् क्विप्—पूर्ववत्—पर्णरुह्—सु, अपृक्त सकार का लोप, हो ढ:—पर्णरुढ्—वाऽवसाने।

(7) द्यौ: (= स्वर्ण, अन्तरिक्ष) देवयतीति। दिवु क्रीडादिषु। दिव् णिच् क्विप्—णिलोप, क्विप् का सर्वापहार लोप—दिव् सु—औं अन्तादेश—यण्।

(8) पुण्यकृत्—पुण्यं कारयति। क्विप्।

## (183) जोरी च [2.24]

**पद०**—जो: 5.1, ई 1.1, च—अव्य०।

**अनु०**—'स्फायि····रक्' (उ०सू० 2.13) से 'रक्' का अनुवर्त्तन है।

**सं०**—जुधातो रक्प्रत्यय: स्याद् धातोश्च 'ई' इत्यादेशो भवति।

**व्याख्या**—'जु' एक सौत्र धातु है। अर्थ—जु धातु से परे रक् प्रत्यय होता है तथा धातु को ईकार अन्तादेश होता है। 'अलोऽन्त्यस्य' से ईकार अन्तादेश धातु के अन्त्य अल् (उकार) के स्थान पर होता है।

**स्वा०द०वृ०**—'जु'धातो रकि प्रत्यय ईकारादेश: [च]। जवति सूक्ष्मो भवतीति **जीर:**, अणु: खड्गो वणिग्द्रव्यं वा। महाभाष्यकारसम्मत्या **'रकि ज्य: सम्प्रसारणम्'** (महा० 1.1.4) इति 'ज्या वयोहानौ' इत्यस्य रकि प्रत्यये सम्प्रसारणम्। जिनात्यवस्थां जहातीति **जीर:**। तथा महाभाष्यकारसम्मत्या 'जीव'-

धातोरदानुक्। जीवति प्राणान् धारयतीति **जीरदानुः**। वैदिकं रूपमेतत्। अत्र च 'जीव'-धातोर्वलि वलोपः ऊठ्निषेधश्च बाहुलकादेव, इत्यादि।

**उदा०**—(1) जीरः (= जीरा, तलवार)—जवति सूक्ष्मो भवति। जु → ज् ई रक् सु।

## (184) सुसूधागृधिभ्यः क्रन् [2.25]

**पद०**—सुसूधागृधिभ्यः 5.3, क्रन् 1.1

**सं०**—सु सू धा गृध् इत्येतेभ्यो धातुभ्यः क्रन् प्रत्ययः स्यात्।

**व्याख्या**—सु, सू, धा तथा गृध्—इन धातुओं से परे क्रन् प्रत्यय होता है। न् की 'हलन्त्यम्' से तथा क् की 'लशक्वतद्धिते' से इत्सञ्ज्ञा होती है। न् अनुबन्ध आद्युदात्त स्वर के लिए है। द्रष्टव्य—'ञ्नित्यादिर्नित्यम्' (पा० 6.1.196)। क् अनुबन्ध गुणनिषेध के लिए है। शेष 'र' रहता है।

**स्वा०द०वृ०**—सुनोति सवति उत्पादयत्यैश्वर्यवान् वा भवतीति **सुरः**, देवसंज्ञो विद्वान्; स्त्रियां **सुरा** मद्यं वा। सूयते वा सुवति प्राणिनः समर्थयतीति **सूरः**, सूर्यो वा। दधाति सर्वान् पोषयति वा स **धीरः**, पण्डितो वा। गृध्यत्यभिकाङ्क्षतीति **गृध्रः**, पक्षिविशेषो वा।

**उदा०**—(1) सुरः (= देवता)—सुनोति सवति। षुञ् अभिषवे। 'धात्वादेः षः सः' से सकार—सु क्रन्—'सार्वधातुकार्धधातुकयोः' से प्राप्त गुण का निषेध, सु।

(2) सूरः (= सूर्य)—सूयते। सुवति। षूञ् प्राणिप्रसवे। सू क्रन्—पूर्ववत्।

(3) धीरः (= धीर)—दधाति पोषयति प्राणिनः। डुधाञ् धारणपोषणयोः। धा क्रन्—'घुमास्थागापाजहातिसां हलि' (पा० 6.4.66) से आकार के स्थान पर ईकार—ध् ई र सु।

(4) गृध्रः (= गीध)—गृध्यत्यभिकाङ्क्षति। गृधु अभिकाङ्क्षायाम्। गृध् क्रन्—लघूपध गुण का निषेध, सु।

## (185) शुसिचिमीनां दीर्घश्च [2.26]

**पद०**—शुसिचिमीनाम् 6.3, दीर्घः 1.1, च—अव्य०।

**अनु०**—'सुसूधागृधिभ्यः क्रन्' (उ०सू० 2.25) से 'क्रन्' का अनुवर्तन है।

**सं०**—शु सि चि मी—इत्येतेषां दीर्घादेशो भवति, एतेभ्यो धातुभ्यः क्रन् प्रत्ययः स्यात्।

**व्याख्या**—'शुसिचिमीनाम्' यह षष्ठ्यन्त पद है। इसका 'दीर्घः' के साथ अन्वय

है। 'शुसिचिमीनाम्' इसे विभक्तिविपरिणाम से पञ्चम्यन्त बना लिया जाता है। तब इन धातुओं से परे क्रन् प्रत्यय होता है। अर्थ—शु, सि, चि तथा मि—इन धातुओं से परे क्रन् प्रत्यय होता है तथा धातुओं में स्थित अच् वर्ण को दीर्घ आदेश होता है।

**स्वा०द०वृ०**—'शु' इति सौत्रो धातुः। शवति गच्छतीति **शूरः**, विक्रमणशीलः पुरुषो वा। सिनोति बध्नातीति **सीरः**, हलं वा। चिनोतीति **चीरम्**, वल्कलं वा। मिनोति प्रक्षिपतीति **मीरः**, समुद्रो वा।

**उदा०**—(1) शूरः (= वीर)—शवति गच्छति। शु सौत्र धातु से क्रन्। शु → शू र सु। महर्षि दयानन्द सरस्वती ने 'शूर' शब्द को 'शॄ हिंसायाम्' धातु से बाहुलकात् डूरन् प्रत्यय करके निष्पन्न किया है। द्रष्टव्य—ऋग्वेद-भाष्य (1.29.4)

(2) सीरः (= हल, सूर्य)—सिनोति बध्नाति। षिञ् बन्धने। 'धात्वादेः षः सः' से सकार—सि क्रन्—दीर्घ आदेश—सीर सु।

(3) चीरम् (= वस्त्र)—चिनोति। चिञ् चयने। चि क्रन्—ची र सु—अतोऽम्।

(4) मीरः (= सागर)—मिनाति। डुमिञ् प्रक्षेपणे। मि क्रन्—मी र सु।

## (186) वाविन्धेः [2.27]

**पद०**—वौ 7.1, इन्धेः 5.1

**अनु०**—'सुसूधागृधिभ्यः क्रन्' (उ०सू० 2.25) से 'क्रन्' का अनुवर्त्तन है।

**सं०**—'वि' इत्युपपदे इन्ध्धातोः क्रन् प्रत्ययः स्यात्।

**व्याख्या**—'वि' शब्द के उपपद रहते इन्ध् धातु से परे क्रन् प्रत्यय होता है।

**स्वा०द०वृ०**—विशेषेणेन्धते प्रदीप्यते तद् **वीध्रम्**, स्वभावशुद्धः।

**उदा०**—(1) वीध्रम् (= गगन, वायु, अग्नि)—विशेषेणेन्धते प्रदीप्यते। वि इन्धी दीप्तौ। वि इन्ध्, क्रन्—'अकः सवर्णे दीर्घः' से सवर्ण दीर्घ—वीन्ध् र—'अनिदितां हल उपधाया०' से अनुनासिकलोप—वीध्र सु—अतोऽम्।

## (187) वृधिवपिभ्यां रन् [2.28]

**पद०**—वृधिवपिभ्याम् 5.2, रन् 1.1

**सं०**—वृध् वप् इत्येताभ्यां धातुभ्यां रन् प्रत्ययः स्यात्।

**व्याख्या**—वृध् तथा वप्—इन धातुओं से परे रन् प्रत्यय होता है। रन् के न् की इत्सञ्ज्ञा है। न् अनुबन्ध का प्रयोजन आद्युदात्त स्वर है। द्रष्टव्य—'ञ्नित्यादिर्नित्यम्' (पा० 6.1.196)।

**स्वा०द०वृ०**—वर्द्धते तत् **वर्ध्रम्**, चर्म वा। वपति बीजं छिनत्ति वा स **वप्रः**, पिता केदारः प्राकारो रोधो वा।

**उदा०**—(1) वर्ध्रम् (= चर्मपट्टी)—वर्द्धते तत्। वृधु वृद्धौ। वृध् रन्—'आर्धधातुकं शेषः' से आर्धधातुक सञ्ज्ञा, 'पुगन्तलघूपधस्य च' से लघूपध गुण, 'उरण् रपरः' से रपरत्व—वर् ध् र सु—अतोऽम्।

(2) वप्रः (= पिता, केदार, शिखर)—वपति बीजम्। छिनत्ति।

(3) अज्रः—बाहुलकात् अज् धातु से रन् प्रत्यय तथा धातु को 'वी' आदेश का निषेध—अज् रन् सु।

## (188) ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेर-भेलशुक्रशुक्लगौरवन्रेरामालाः [2.29]

**पद०**—ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्रेरामालाः 1.3

**सं०**—ऋज्र इन्द्र अग्र वज्र विप्र कुब्र चुब्र क्षुर खुर भद्र उग्र भेर भेल शुक्र शुक्ल गौर वन्र इरा गाला—इत्येते शब्दा रन्प्रत्ययान्ता निपात्यन्ते।

**व्याख्या**—ऋज्र, इन्द्र, अग्र, वज्र, विप्र, कुब्र, चुब्र, क्षुर, खुर, भद्र, उग्र, भेर, भेल, शुक्र, शुक्ल, गौर, वन्र, इरा और माला—ये शब्द रन्प्रत्ययान्त निपातित हैं।

**स्वा०द०वृ०**—ऋज्राद्येकोनविंशतिः शब्दा निपात्यन्ते। अर्जति गच्छति तिष्ठति वा स **ऋज्रः**, नायको वा। गुणाभावः। इन्दति परमैश्वर्यवान् भवतीति **इन्द्रः**, समर्थोऽन्तरात्माऽऽदित्यो योगी वा। अङ्गति गच्छतीति **अग्रम्**, प्रधानमुपरिभागो वा। [ धातोर्नलोपः। ] वजति प्राप्नोति प्राप्यते वा स **वज्रः**, हीरकं शस्त्रं वा। वपति धर्म्ममिति **विप्रः**, मेधावी वा। [ धातोरुपधाया इत्त्वम्। ] कुम्बत्याच्छादयतीति **कुब्रम्**, अरण्यं वा। चुम्बति यो येन वा तत् **चुब्रम्**, मुखं वा। अत्रोभयत्र इदितोऽपि नलोपः [ निपातनात् ]। यः क्षुरति विलिखति येन वा छिनत्तीति स **क्षुरः**, छेदनद्रव्यं कोकिलाक्षं गोक्षुरो लोमच्छेदकं नापितशस्त्रं वा। खुरति छिनत्ति यो येन वा स **खुरः**, शफं वा। अत्रोभयत्र रनि रेफलोपो गुणाऽभावश्च। भन्दते कल्याणं करोतीति **भद्रम्**, कल्याण-[ प्रद ]म्। नकारलोपः। उच्यति समवैतीति **उग्रः**, महेश्वर उत्कटः क्षत्रं वा। [ चकारस्य गकारः। ] बिभेत्यस्मात् स **भेरः**, **भेरी** दुन्दुभिर्वा। गौरादित्वान् ङीष्; पक्षे भेरशब्दस्य लत्वम्=**भेलो**, जलतरणद्रव्यं वृद्धकायः कातरो त्रा। शुच्यते पवित्रीभवतीति **शुक्रम्**, ब्रह्माग्निराषाढः प्राणिबीजं नेत्ररोगो वा; अस्यैव व्यवस्थितविभाषया पक्षे लत्वम्=**शुक्लः**, श्वेतं रजतं वा। [ उभयत्र चकारस्य कुत्वम्। ] गवतेऽव्यक्तं शब्दयतीति **गौरः**, श्वेतो रक्तवर्णो वा; **'गौरी'** स्त्री। [ धातोर्वृद्धिः। ] ङीष्। वनति सम्भजतीति **वन्रः** विभागी।

एति गच्छति यया सा **इरा**, उदकं मद्यं वा। [ गुणाभावः। ] **'इरावान्'** समुद्रः, **'ऐरावती'** नदी। इरया मद्येन माद्यतीति **'इरम्मदः'**। माति मानहेतुर्भवतीति **माला** पुष्पादिस्रक्; **मालं** क्षेत्रम्; **मालो** जनः। [ प्रत्ययरेफस्य लत्वम्। ]

**बाहुलकात्**—तितिक्षते येन तत् **तीव्रम्**, तीक्ष्णं वा। जस्य वो दीर्घत्वं च धातोः।

**उदा०**—(1) ऋज्रः (= नायक)—अर्जति गच्छति। ऋज अर्जने। ऋज् रन्—निपातन से लघूपध गुण का अभाव, सु।

(2) इन्द्रः (= इन्द्र, सूर्य)—इन्दति परमैश्वर्यवान् भवति। इदि परमैश्वर्ये। इदि—'इदितो नुम् धातोः' से नुम्, अनुस्वार, परसवर्ण—इन् द् रन्—सु।

(3) अग्रम् (= आगे)—अङ्गति गच्छति। अगि गतौ। अ नुम् ग्—नुम् आगम, रन्, निपातन से अनुनासिक लोप—अग् र सु।

(4) वज्र (= वज्र)—वजति प्राप्नोति। वज गतौ। वज् रन्—सु।

(5) विप्रः (= ब्राह्मण, पीपल)—वपति धर्मम्। डुवप् बीजसन्ताने छेदने च। वप् रन्—निपातन से धातु की उपधा को इकार आदेश—विप् र सु।

(6) कुब्रम् (= वन)—कुम्बत्याच्छादयति। कुबि आच्छादने। 'इदितो नुम् धातोः' से नुम्—कु न् ब् रन्—अनुनासिक लोप, सु। 'कुप्रम्' इत्यपि क्वचित्।

(7) चुब्रम् (= मुख)—चुम्बति यो (येन वा)। चुबि वक्त्रसंयोगे। चु न् ब् रन्—नुम्, निपातन से अनुनासिक लोप, सु। चुप्रेति पाठान्तरम्।

(8) क्षुरः (= छुरा, खुरा)—यः क्षुरति विलिखति (येन वा)। क्षुर विलेखने। क्षुर् रन्—प्राप्त लघूपध गुण का निपातन से निषेध, सु।

(9) खुरः (= खुर)—खुरति छिनत्ति। खुर छेदने। खुर् रन्—'रो रि' से पूर्व रेफ का लोप—खुर—'ढ्रलोपे पूर्वस्य दीर्घोऽणः' से प्राप्त दीर्घादेश का अभाव, गुणाऽभाव, सु।

(10) भद्रम् (= कल्याण)—भन्दते कल्याणं करोति। भदि कल्याणे सुखे च। नुम्—भ न् द् रन्—निपातन से नकारलोप—भद्र सु—अतोऽम्।

(11) उग्रः (= भयानक, महेश्वर)—उच्यति समवैति। उच समवाये। उच् रन्—निपातन से चकार को गकार—उग् र—सु।

(12) भेरः (= दुन्दुभि)—बिभेत्यस्मात्। ञिभी भये। भी रन्—गुण, सु। 'स्त्रियाम्' के अधिकार में गौर्यादिलक्षण ङीष्। भेर ङीष्—यस्येति च, सु, लोप—भेरी।

(13) भेलः (= मूर्ख, वृद्ध शरीर)—भेर—'रलयोरभेदः' नियम से रेफ को लकार आदेश।

(14) शुक्रम् (= वीर्य, नेत्ररोग)—शुच्यते पवित्रीभवति। शुच शोके। कुत्व—शुक् र सु।

(15) शुक्लम् (= श्वेत, चाँदी)—व्यवस्थित विभाषा से रेफ को लत्व। रलयोरभेदः।

(16) गौरः (= गौर वर्ण)—गवतेऽव्यक्तं शब्दयति। गु अव्यक्ते शब्दे। गु रन्—निपातन से वृद्धि—गौ र सु। इसी प्रकार गौरी—षिद्गौरादिभ्यश्च।

(17) वन्नः (= विभजक)—वनति सम्भजति। वन सम्भक्तौ। वन् रन्—सु।

(18) इरा (= जल, शराब, सरस्वती)—एति गच्छति। इण् गतौ। इ रन्—प्राप्त गुण का निपातन से निषेध। स्त्रियाम्, अजाद्यतष्टाप्—इर आ—सवर्णदीर्घ, सु, लोप।

(19) माला (= माला)—माति मानहेतुर्भवति। मा माने। मा रन्-रेफ को लकार आदेश, टाप्। इसी प्रकार (20) इरावान्—इरा मतुप्। (21) इरम्मदः—इरया मद्येन माद्यति। 'उग्रम्पश्येरम्मदपाणिन्धमाश्च' (पा० 3.2.37)।

## (189) समि कस उकन् [2.30]

**पद०**—समि 7.1, कसः 5.1, उकन् 1.1

**सं०**—सम्युपपदे कस्धातोर् उकन् प्रत्ययः स्यात्।

**व्याख्या**—'सम्' शब्द के उपपद रहते कस् धातु से परे उकन् प्रत्यय होता है। उकन् के 'न्' की इत्सञ्ज्ञा है। न् अनुबन्ध आद्युदात्त स्वर के लिए है। द्रष्टव्य—'ञ्नित्यादिर्नित्यम्' (पा० 6.1.196)।

**स्वा०द०वृ०**—सम्यक् कसति गच्छतीति **सङ्कसुकः**, संशयमापन्नश्चञ्चलो दुर्जनो वा।

**उदा०**—(1) सङ्कसुकः (= चंचल, दुष्ट)—सम्यक् कसति। गच्छति। सम् कस गतौ। सम् कस् उकन्—अनुस्वार (मोऽनुस्वारः)—संकसुक—अनुस्वार को परसवर्ण, सु।

## (190) पचिनशोर्णुकन् कनुमौ च [2.31]

**पद०**—पचिनशोः 6.2, णुकन् 1.1, कनुमौ 1.2, च—अव्य०।

**सं०**—पच् नश् इत्येताभ्यां धातुभ्यां णुकन् प्रत्ययः स्याद्, धात्वोः क्रमेण ककारादेशनुमागमौ स्याताम्।

**व्याख्या**—'पचिनशोः' षष्ठ्यन्त पद है। इसे विभक्तिविपरिणाम से पञ्चम्यन्त

(यथा—पचिनशिभ्याम्) बनाकर इन धातुओं से परे प्रत्यय किया जाता है। दो प्रकृतियाँ (पच्, नश्) हैं तथा दो ही कार्य (ककारादेश तथा नुम् आगम) हैं। 'यथासङ्ख्यमनुदेशः समानाम्' की प्रवृत्ति होकर ये कार्य क्रमेण होते हैं अर्थात् पच् धातु को ककार आदेश और नश् धातु को नुम् आगम होता है। अर्थ—पच् और नश् धातुओं से परे णुकन् प्रत्यय होता है तथा पच् धातु को ककार अन्तादेश व नश् धातु को नुम् आगम होता है। णुकन् के न् की 'हलन्त्यम्' से तथा ण् की 'चुटू' से इत्सञ्ज्ञा होती है। शेष 'उक' रहता है। ण् अनुबन्ध गुणवृद्धि के लिए है तथा न् अनुबन्ध आद्युदात्त स्वर के लिए है।

**स्वा०द०वृ०**—पच-नशधातुभ्यां णुकन्प्रत्ययः। पचधातोश्चस्य कः, नशधातोर्नुम् च। पचतीति **पाकुकः**, सूपकारो वा। नश्यतीति **नंशुकः**, अणुवाचको वा।

**उदा०**—(1) पाकुकः (= रसोइया)—पचतीति। डुपचष् पाके। पच् णुकन्—पाच् उक—'अत उपधायाः' से उपधावृद्धि—पाक् उक—ककार अन्तादेश, सु।

(2) नंशुकः (= अणुवाचक)—नश्यतीति। णश अदर्शने। णश्—'णो नः' से नकार—नश् णुकन्—नुम् आगम, अनुबन्धलोप, मिदचोऽन्त्यात् परः—न न् श् उक—'नश्चाऽपदान्तस्य झलि' से अनुस्वार, सु।

## (191) **भियः क्रुकन्** [2.32]

**पद०**—भियः 5.1, क्रुकन् 1.1

**सं०**—भीधातोः क्रुकन् प्रत्ययो भवति।

**व्याख्या**—भी धातु से क्रुकन् प्रत्यय होता है। न् की 'हलन्त्यम्' से तथा आदि ककार की 'लशक्वतद्धिते' से इत्सञ्ज्ञा होती है। शेष 'रुक' बचता है। क् अनुबन्ध गुण-वृद्धि के निषेध के लिए है। **न** अनुबन्ध आद्युदात्त स्वर के लिए है।

**स्वा०द०वृ०**—यो बिभेति स **भीरुकः**, कातरो वा।

**उदा०**—(1) भीरुकः (= कायर, रीछ, घूक)—यो बिभेति। ञिभी भये। भी क्रुकन्—गुणनिषेध, सु।

## (192) **क्वुन् शिल्पिसञ्ज्ञयोरपूर्वस्याऽपि** [2.33]

**पद०**—क्वुन् 1.1, शिल्पिसञ्ज्ञयोः 7.2, अपूर्वस्य 6.1, अपि–अव्य०।

**सं०**—शिल्पिनि वाच्ये सञ्ज्ञायां च गम्यमाने उपपदपूर्वकात् उपपदरहिताच्च धातोर् उभयथा क्वुन् प्रत्ययः स्यात्।

**व्याख्या**—'अपि' पद के द्वारा 'अपूर्वस्य' के साहचर्यवशात् 'पूर्वस्य' पद का अध्याहार किया जाता है। अर्थ—उपपदपूर्वक तथा उपपद के पूर्व में न रहने पर–दोनों अवस्थाओं में धातु से क्वुन् प्रत्यय होता है—यदि शिल्पी अर्थ वाच्य हो या सञ्ज्ञा गम्यमान हो।

**स्वा०द०वृ०**—शिल्पिनि संज्ञायां च गम्यमानायां सोपपदाद् अनुपपदाद्वा सामान्याद्धातोः क्वुन् भवति। [ शिल्पिनि– ] रजतीति **रजकः**, वस्त्रशोधको वा। इक्षून् कुट्टयतीति **इक्षुकट्टकः**, गौडिकस्येयं संज्ञा। तक्षति तनूकरोतीति **तक्षकः** वर्धकिः, शिल्पी [ वा। धुनोति कम्पयतीति ] **धुवकः** गर्भमोचको जनः, संज्ञा वा। अभ्रति गच्छति येन तत् **अभ्रकम्**, औषधं संज्ञा वा। चरतीति **चरकः**, वैद्यकशास्त्रं गन्ता वा। चषति भक्षयत्यस्मिन्निति **चषकं** पानपात्रं, शालं वा। भञ्जतीति **भञ्जकः**, मत्स्यभेदः प्राकारो वा। शालान् भञ्जन्ति यस्यां सा **शालभञ्जिका**, क्रीडा। काष्ठं पुत्रीयति यस्यां सा **काष्ठपुत्रिका**, क्रीडा वा। पुष्पैः प्रचायन्ते पूजयन्ति यस्यां सा **पुष्पप्रचायिका**, क्रीडा वा। शुनति गच्छतीति **शुनकः** श्वा [ वा ]। भषति भर्त्सयतीति **भषकः**, श्वा वा।

**बाहुलकाद्**—आमलते समन्ताद्धारयतीति **आमलकः**, वृक्षभेदः [ वा ]; गौरादित्त्वान् ङीष्=**आमलकी**। कलामंशं पाति रक्षतीति **कलापकः**, चन्द्रमा वा। मल्लते गन्धं धरतीति **मल्लिका**, पुष्पजातिर्वा। कन्यते दीप्यते काम्यतेऽभीप्स्यते वा तत् **कनकं**, सुवर्णं वा। कटत्यावृणोत्यङ्गमिति **कटकम्**, आभूषणं वा 'कड़ा' इति प्रसिद्धं, शिखरं राजधानी नितम्बं वा। लटति बाल इव भवतीति **लटकः**, दुर्जनो वा। इत्यादिषु शिल्पिसंज्ञयोः क्वुन् बोध्यः।

**उदा०**—(1) रजकः (= वस्त्रशोधक)—रजतीति। रञ्ज् क्वुन्—हलन्त्यम्, लशक्वतद्धिते—रञ्ज् वु—'रजकरजनरजस्सूपसङ्ख्यानम्' (पा० 6.4.24. वा०) से अनुनासिक लोप—रज् वु—'युवोरनाकौ' (पा० 7.1.1) से अक आदेश, सु।

(2) इक्षुकुट्टकः (= गौडिक की सञ्ज्ञा)—इक्षून् कुट्टयति। इक्षु कुट्ट् क्वुन्—लघूपध गुण का निषेध, सु।

(3) तक्षकः (= शिल्पी, एक सर्प)—तक्षति तनूकरोति। तक्ष् क्वुन्—सु।

(4) धुवकः (= गर्भमोचक व्यक्ति की सञ्ज्ञा)—धुनोति कम्पयति। धू क्वुन्—उवङ् आदेश—धुव् अक सु।

(5) अभ्रकम् (= एक औषधि)—अभ्रति गच्छति येन तत्। अभ्र् क्वुन्—सु।

(6) चरकः (= एक वैद्य)—चरतीति। चर् क्वुन्—सु।

(7) चषकम् (= प्याला)—चषतीति। चष् क्वुन्—सु।

(8) भञ्जकः (= एक मछली)—भञ्जतीति। भञ्ज् क्वुन्—पूर्ववत्। नकार-लोपाऽभावोऽत्र चिन्तनीयः।

(9) काष्ठपुत्रिका (= एक क्रीडा)—काष्ठं पुत्रीयति यस्यां सा। काष्ठपुत्र क्वुन्—काष्ठपुत्रक टाप्—स्त्रियाम्, अजाद्यतष्टाप्, प्रत्ययस्थात् कात् पूर्वस्य०—काष्ठपुत्रिका सु—हल्ङ्याब्भ्यो दीर्घात्०।

(10) पुष्पप्रचायिका (= एक क्रीडा)—पुष्पैः प्रचायन्ते पूजयन्ति यस्यां सा। पूर्ववत्।

(11) शुनकः (= कुत्ता)—शुनति गच्छति। शुन् क्वुन् सु।

(12) भषकः (= कुत्ता)—भषति। भष् क्वुन्—सु।

इसी प्रकार (13) आमलकः, (14) कलापकः, (15) मल्लिका, (16) कनकम्, (17) कटकम्, (18) खनकः, (19) जनकः, (20) क्षिपकः।

## (193) रमे रश्च लो वा [2.34]

**पद०**—रमेः 5.1, रः 6.1, च—अव्य०, लः 1.1, वा—अव्य०।

**अनु०**—'क्वुन् शिल्पिसञ्ज्ञ०' (उ०सू० 2.33) से 'क्वुन्' का अनुवर्त्तन है।

**सं०**—रम्धातोः क्वुन् प्रत्ययः स्याद् धातोश्च यो रेफस्तस्य स्थाने लकारो विकल्पेन भवति।

**व्याख्या**—'रमेः' पद की आवृत्ति की जाती है। प्रथम 'रमेः' पद को पञ्चम्यन्त मानकर धातु से प्रत्यय किया जाता है। द्वितीय 'रमेः' पद को विभक्तिविपरिणाम के द्वारा षष्ठ्यन्त बनाकर इसका 'रः' के साथ अन्वय किया जाता है। अर्थ—रम् धातु परे क्वुन् प्रत्यय होता है तथा धातु का जो रेफ, उसके स्थान पर लकार आदेश विकल्प से होता है। लकारस्थ अकार उच्चारणार्थ है।

**स्वा०द०वृ०**—रमतेऽसौ **रमकः**, रमणशीलो वा; **लमकः** अपि स एव।

**उदा०**—(1) लमकः (= रमणशील)—रमतेऽसौ। रमु क्रीडायाम्। रम् क्वुन्—रम् अक—लकार आदेश—लम् अक—सु।

(2) रमकः—लकार आदेश अभाव पक्ष।

## (194) जहातेर्द्वे च [2.35]

**पद०**—जहातेः 5.1, द्वे 1.1, च—अव्य०।

**अनु०**—'क्वुन् शिल्पि०' (उ०सू० 2.33) से 'क्वुन्' का अनुवर्त्तन है।

**सं०**—हाधातोः क्वुन् प्रत्ययः स्याद्, धातोश्च द्वे भवतः।

**व्याख्या**—'जहातेः' पद की आवृत्ति करके सूत्रार्थ किया जाता है। अर्थ—हा धातु से परे क्वुन् प्रत्यय है और धातु को द्वित्व होता है।

**स्वा०द०वृ०**—जहाति त्यजति हानिं करोतीति **जहकः**, त्यागी कालो वा।

**उदा०**—(1) जहकः (= त्यागी, काल, बालक, केंचुली)—जहाति त्यजति। ओहाक् त्यागे। हा हा क्वुन्—पूर्वोऽभ्यासः, ह्रस्वः—ह हा वु—कुहोश्चुः—झ हा वु—अभ्यासे चर्च—जहा वु—युवोरनाकौ—ज हा अक—आतो लोप इटि च—जह् अक—सु।

## (195) ध्मो धम च [2.36]

**पद०**—ध्मः 5.1, धम 1.1, च—अव्य०।
**अनु०**—'क्वुन् शिल्पि०' (उ०सू० 2.33) से 'क्वुन्' का अनुवर्त्तन है।
**सं०**—ध्माधातोः क्वुन् प्रत्ययः स्याद् धातोश्च 'धम' इत्यादेशो भवति।

**व्याख्या**—'ध्मः' पद की आवृत्ति की जाती है। अर्थ—ध्मा धातु से परे क्वुन् प्रत्यय होता है और धातु के स्थान पर 'धम' आदेश होता है। धम यह अनेकाल् है। अतः धम आदेश 'अनेकाल् शित् सर्वस्य' से सम्पूर्ण स्थानी (ध्मा) के स्थान पर होता है।

**स्वा०द०वृ०**—धमति शब्दं करोतीति अग्निं वा संयुनक्ति स **धमकः**, कर्मकारो वा।

**उदा०**—(1) धमकः (= कारीगर)—धमति शब्दं करोति। ध्मा शब्दाऽग्निसंयोगयोः—धम क्वुन्—धम अक—युवोरनाकौ—धमक सु।

## (196) हनो वध च [2.37]

**पद०**—हनः 5.1, वध 1.1, च—अव्य०।
**अनु०**—'क्वुन् शिल्पि०' (उ०सू० 2.33) से 'क्वुन्' का अनुवर्त्तन है।
**सं०**—हन्धातोः क्वुन् प्रत्ययः स्याद् धातोश्च 'वध' इत्यादेशो भवति।

**व्याख्या**—हनः पद की पूर्ववत् आवृत्ति करके सूत्रार्थ किया जाता है। अर्थ—हन् धातु से क्वुन् प्रत्यय होता है तथा धातु को 'वध' आदेश होता है। अनेकाल् होने से 'वध' आदेश सर्वादेश होता है।

**स्वा०द०वृ०**—हन्तीति **वधकः** हिंसकः।

**उदा०**—(1) वधकः (= हत्यारा)—हन्तीति। हन हिंसागत्योः। हन् → वध क्वुन्—वधक सु।

## (197) बहुलमन्यत्राऽपि [2.38]

**पद०**—बहुलम् 2.1, अन्यत्र—अव्य०, अपि—अव्य० ।
**अनु०**—'क्वुन् शिल्पि०' (उ०सू० 2.33) से 'क्वुन्' का अनुवर्त्तन होता है।
**सं०**—अन्येभ्यो धातुभ्योऽपि बहुलं क्वुन् प्रत्ययः स्यात्।

**व्याख्या**—पूर्वशास्त्र में कथित धातुओं के अतिरिक्त धातुओं से क्वुन् प्रत्यय बहुलता से होता है। 'बहुलम्' कथन से प्रत्यय की अनेकविध स्थिति होती है।

**स्वा०द०वृ०**—बहुलवचनादन्यत्रापि क्वुन्। कुहयति विस्मयं कारयतीति **कुहकः**, दाम्भिको नीहारो वा। कृन्तति छिनत्तीति **कृतकं,** मिथ्या वा। भिनत्ति येन स **भिदकः**, खड्गो वा। छिनत्ति येन तत् **छिदकं,** वज्रो वा। रोचतेऽनेन तत् **रुचकम्,** मातुलुङ्गकं वा, 'बिजौरा नींबू' इति प्रसिद्धं वा। लङ्गति गच्छतीति **लङ्गकः**, प्रियो वा। उज्झत्युत्सृजतीति **उज्झकः** योगी मेघो वा।

**उदा०**—(1) कुहकः (= जादूगर)—कुहयति विस्मयं कारयति। कुह् क्वुन्।
(2) भिदकः (= तलवार)—येन भिनत्तीति। भिद् क्वुन्—लघूपध गुण निषेध।
(3) छिदकः—छिद् क्वुन्—पूर्ववत्।
(4) कृतकम् (= कृत्रिम)। कृन्तति। कृन्त् क्वुन्।
(5) रुचकम् (= सोना)। रोचतेऽनेन। रुच् क्वुन्।
(6) लङ्गकः (= प्रिय)। लङ्गति गच्छति। लङ्ग् क्वुन्।
(7) उज्झकः (= बादल)। उज्झत्युत्सृजति। उज्झ् क्वुन्।
(8) वृत्रवधः (= इन्द्र)। वृत्रं हन्ति। वृत्र हन् > वध अच् (उ०सू० 5.97)।

## (198) कृषेर्वृद्धिश्चोदीचाम् [2.39]

**पद०**—कृषेः 5.1, वृद्धिः 1.1, च—अव्य०, उदीचाम् 6.3
**अनु०**—'क्वुन् शिल्पि०' (उ०सू० 2.33) से 'क्वुन्' का अनुवर्त्तन है।
**सं०**—कृष्धातोः क्वुन् प्रत्ययः स्याद् उदीचाम् आचार्याणां मते धातोश्च वृद्धिर् आदेशो भवति।

**व्याख्या**—कृष् धातु से परे क्वुन् प्रत्यय होता है तथा उदीच्य आचार्यों के मत में धातु को वृद्धि आदेश भी होता है। यह आदेश उदीच्य आचार्यों के मत में होता है तथा आचार्य पाणिनि के मत में नहीं होता है। अतः एक पक्ष में वृद्धि आदेश होता है तथा दूसरे पक्ष में नहीं होता है। वृद्धि पक्ष में 'इको गुणवृद्धी' परिभाषा प्रवृत्त होकर धातु के इक् वर्ण (ऋकार) के स्थान पर यह आदेश प्राप्त होता है। 'उरण् रपरः' से रपर होकर 'आर्' के रूप में वृद्धि आदेश होता है।

**स्वा०द०वृ०**—कृषतीति **कार्षकः, कृषकः** वा कृषीवलः।

**उदा०**—(1) कार्षकः (= किसान)—कृषतीति। कृष विलेखने। कृष् क्वुन्—वृद्धि आदेश—कार्ष् अक सु।

(2) कृषकः—वृद्धि अभाव पक्ष।

## (199) उदकञ्च [2.40]

**पद०**—उदकम् 1.1, च—अव्य०।

**अनु०**—'क्वुन् शिल्पि०' (उ०सू० 2.33) से 'क्वुन्' का अनुवर्त्तन है।

**सं०**—उदकशब्दः क्वुन्प्रत्ययान्तो निपात्यते।

**व्याख्या**—क्वुन् प्रत्ययान्त 'उदक' शब्द निपातन से सिद्ध है।

**स्वा०द०वृ०**—उनत्ति क्लेदयतीति **उदकं** जलं वा।

**उदा०**—(1) उदकम् (= जल)—उनत्तीति। उन्दी क्लेदने। उन्द् क्वुन्—नकारलोप—उद् अक सु।

## (200) व्रश्चिकृषोः किकन् [2.41]

**पद०**—व्रश्चिकृषोः 6.2, किकन् 1.1

**सं०**—व्रश्च् कृष् इत्येताभ्यां धातुभ्यां किकन् प्रत्ययः स्यात्।

**व्याख्या**—'व्रश्चिकृषोः' पद षष्ठ्यन्त है। विभक्तिविपरिणाम से इसे पञ्चम्यन्त (यथा—व्रश्चिकृषिभ्याम्) बना लिया जाता है। अर्थ—व्रश्च् और कृष् इन धातुओं से परे किकन् प्रत्यय होता है। 'न्' की 'हलन्त्यम्' से तथा आदि 'क्' की 'लशक्वतद्धिते' से इत्सञ्ज्ञा है। 'इक' शेष रहता है। 'न्' अनुबन्ध आद्युदात्त स्वर के लिए तथा 'क्' अनुबन्ध गुणनिषेध के लिए है।

**स्वा०द०वृ०**—वृश्चति छिनत्तीति **वृश्चिकः** विषी जीवविशेषः, शूककीटो वा, 'केंचुआ' इति प्रसिद्धः। कृषति येन स **कृषिकः**, फालो वा।

**उदा०**—(1) वृश्चिकः (= बिच्छू, गोबर का कीड़ा)—वृश्चति छिनत्ति। ओव्रश्चू छेदने। व्रश्च् किकन्—व्रश्च् इक—'ग्रहिज्याविययिव्यधिवष्टि०' (पा० 6.1.16) से सम्प्रसारण—वृश्च् इक सु।

(2) कृषिकः (= फाल, किसान)–कृषति येन। कृष विलेखने। कृष् किकन्—गुणनिषेध, सु।

## (201) प्राङि पणिकषः [2.42]

**पद०**—प्राङि 7.1, पणिकषः 5.1

**अनु०**—'व्रश्चिकृषोः किकन्' (उ०सू० 2.41) से 'किकन्' का अनुवर्त्तन है।

**सं०**—'प्राङ्' इत्युपपदे पण् कष् इत्येताभ्यां धातुभ्यां किकन् प्रत्ययः स्यात्।

**व्याख्या**—प्राङ् शब्द के उपपद रहते पण् तथा कष्—इन धातुओं से परे किकन् प्रत्यय होता है।

**स्वा०द०वृ०**—प्रकर्षेण समन्तात् पणायत्यसौ **प्रापणिकः**, पण्यविक्रयी वा। प्राकषति हिनस्तीति **प्राकषिकः**, पारदारिको वा।

**उदा०**—(1) प्रापणिकः (= व्यापारी)—प्रकर्षेण समान्तात् पणायत्यसौ। प्राङ् पण् किकन्—सु। पण व्यवहारे।

(2) प्राकषिकः (= जार पुरुष)—प्रकर्षेण कषति। कष हिंसायाम्। पूर्ववत्।

## (202) मुषेर्दीर्घश्च [2.43]

**पद०**—मुषेः 5.1, दीर्घः 1.1, च—अव्य०।

**अनु०**—'व्रश्चिकृषोः किकन्' (उ०सू० 2.1) से 'किकन्' का अनुवर्त्तन है।

**सं०**—मुष्धातोः किकन् प्रत्ययः स्याद् धातोश्च दीर्घादेशः स्यात्।

**व्याख्या**—'मुषेः' पद का आवर्त्तन किया जाता है। प्रथम 'मुषेः' पद को पञ्चम्यन्त मानकर धातु से परे प्रत्यय किया जाता है। द्वितीय 'मुषेः' पद को विभक्ति-विपरिणाम से षष्ठ्यन्त मानकर धातु को दीर्घ आदेश किया जाता है। अर्थ—मुष् धातु से परे किकन् प्रत्यय होता है तथा धातु को दीर्घ आदेश होता है। ह्रस्व, दीर्घ आदि सञ्ज्ञाएँ अच् वर्णों की हुआ करती हैं। अतः दीर्घ आदेश मुष् धातु में स्थित अच् वर्ण (उकार) के स्थान पर प्राप्त होता है। 'स्थानेऽन्तरतमः' से उकार के स्थान पर ऊकार दीर्घ आदेश होता है।

**स्वा०द०वृ०**—मुष्णाति पदार्थानिति **मूषिकः** आखुर्वा; स्त्रियां **'मूषिका'**। **अजादित्वात्** [ अ० 4.1.4 ] टाप्।

**उदा०**—(1) मूषिकः (= चूहा, चौर, एक वृक्ष)—मुष्णाति। मुष स्तेये। मुष् क्किन्—धातु को दीर्घ आदेश—मूष् इक सु। मूषिक शब्द का अजादि गण में पाठ होने से 'स्त्रियाम्' के अधिकार में इससे पर 'अजाद्यतष्टाप्' (पा० 4.1.4) से अजादिलक्षण टाप् हुआ—मूषिक आ—अनुबन्धलोप, 'अकः सवर्णे दीर्घः' से सवर्णदीर्घ, सु, अपृक्त सकार का लोप।

## (203) स्यमेः सम्प्रसारणञ्च [2.44]

**पद०**—स्यमेः 5.1, सम्प्रसारणम् 1.1, च—अव्य०।

**अनु०**—'व्रश्चिकृषोः किकन्' (उ०सू० 2.41) से 'किकन्' का तथा 'मुषेर्दीर्घश्च' (उ०सू० 2.43) से 'दीर्घः' का अनुवर्त्तन है।

**सं०**—स्यम्धातोः किकन् प्रत्ययः स्याद् धातोश्च सम्प्रसारणदीर्घाऽऽदेशौ स्याताम्।

**व्याख्या**—'स्यमेः' पद की पूर्ववत् आवृत्ति करके सूत्रार्थ किया जाता है। अर्थ—स्यम् धातु से परे किकन् प्रत्यय होता है तथा धातु को सम्प्रसारण और दीर्घ आदेश—ये दो कार्य होते हैं। 'इग्यणः सम्प्रसारणम्' से यण् वर्ण के स्थान पर इक् वर्ण होता है। स्यम् धातु में यण् वर्ण य् है। इसके स्थान पर 'स्थानेऽन्तरतमः' से इकार इक् वर्ण होता है। इकार को दीर्घ आदेश ईकार होता है।

**स्वा०द०वृ०**—स्यमति शब्दयतीति **सीमिकः**, वृक्षभेदो वा।

**उदा०**—(1) सीमिकः (= एक वृक्ष, चींटी, वल्मीक)—स्यमति शब्दयति। स्यमु शब्दे। स्यम् किकन्—सम्प्रसारण—स् इ अम् इक—'सम्प्रसारणाच्च' से पूर्वरूप—सिम् इक—दीर्घ आदेश—सीमिक सु।

## (204) क्रिय इकन् [2.45]

**पद०**—क्रियः 5.1, इकन् 1.1

**सं०**—क्रीधातोर् इकन् प्रत्ययः स्यात्।

**व्याख्या**—क्री धातु से परे इकन् प्रत्यय होता है। 'न्' की इत्सञ्ज्ञा है। 'न्' अनुबन्ध आद्युदात्त स्वर के लिए है। द्रष्टव्य—'ञ्नित्यादिर्नित्यम्' (पा० 6.1.196)।

**स्वा०द०वृ०**—क्रीणाति द्रव्येण पदार्थान्तरं ददाति गृह्णाति वा स **क्रयिकः** क्रेता; **विक्रयिको** विक्रेता।

**उदा०**—(1) क्रयिकः (= व्यापारी)—क्रीणातीति। डुक्रीञ् द्रव्यविनिमये। क्री इकन्—प्रत्यय की 'आर्धधातुकं शेषः' से आर्धधातुक सञ्ज्ञा, 'सार्वधातुकार्धधातु०' से गुण—क्रे इक—'एचोऽयवायावः' से अय् आदेश, सु।

## (205) आङि पणिपनिपतिखनिभ्यः [2.46]

**पद०**—आङि 7.1, पणिपनिपतिखनिभ्यः 5.3

**अनु०**—'क्रिय इकन्' (उ०सू० 2.45) से 'इकन्' का अनुवर्त्तन है।

**सं०**—आङ् इत्युपपदे पण् पन् पत् खन् इत्येतेभ्यो धातुभ्य इकन्प्रत्ययः स्यात् ।

**व्याख्या**—'आङ्' शब्द के उपपद रहते पण्, पन्, पत् तथा खन्—इन धातुओं से परे इकन् प्रत्यय होता है ।

**स्वा०द०वृ०**— [ आ ] समन्तात् पणायति व्यवहरति स **आपणिकः**, वैश्यो वा । आपणेन व्यवहरतीति तद्धिते ठकि सिद्धे नित्स्वरार्थं वचनम् । आपनायतीति **आपनिकः**, म्लेच्छजातिर्वा । [ आ ] समन्तात् पततीति **आपतिकः**, श्येनो वा । [ आ ] समन्तात् खनतीति **आखनिकः**, मूषिको वराहो वा ।

**उदा०**—(1) आपणिकः (= वैश्य, व्यापारी)—आ समन्तात् पणायति व्यवहरति । आङ् पण पन व्यवहारे स्तुतौ च—आ पण् इकन् सु । शङ्का—'आपणेन व्यवहरति' इस विग्रह की दशा में 'कठिनान्तप्रस्तार०' (पा० 4.4.72) से तद्धित ठक् प्रत्यय होकर 'आपणिक' शब्द निष्पन्न होता है । तब प्रकृत सूत्र की क्या आवश्यकता है । समा०—ठक् प्रत्ययान्त शब्द आद्युदात्त नहीं है । इसे आद्युदात्त स्वर के लिए इकन् प्रत्यय किया है । शङ्का—'आपणम् अस्याऽस्तीति' इस विग्रह की दशा में 'अत इनिठनौ' (पा० 5.2.115) से मत्वर्थीय ठन् प्रत्यय करके इष्ट स्वर की सिद्धि की जा सकती है ।

(2) आपनिकः (= म्लेच्छ जाति)—आपनायति । आङ् पन इकन्—पूर्ववत् ।

(3) आपतिकः (= बाज)—आ समन्तात् पतति । पत्लृ गतौ । आ पत् इकन् ।

(4) आखनिकः (= चूहा, वराह)—आ समन्तात् खनतीति । आङ् खनु अवदारणे । आ खन् इकन्—सु ।

## (206) श्यास्त्याहृञविभ्य इनच् [2.47]

**पद०**—श्यास्त्याहृञविभ्यः 5.3, इनच् 1.1

**सं०**—श्यै स्त्यै हृ अव्—इत्येतेभ्यो धातुभ्य इनच् स्यात् ।

**व्याख्या**—श्यै, स्त्यै, हृ तथा अव्—इन धातुओं से इनच् प्रत्यय होता है । च् अनुबन्ध चित्-लक्षण स्वर के लिए है । 'चितः' (पा० 6.1.162) ।

**स्वा०द०वृ०**—श्यायति गच्छतीति **श्येनः**, पक्षिभेदो वा । स्त्यायति शब्दयति सङ्घातयतीति स **स्त्येनः**, चौरो वा । हरतीति **हरिणः** मृगः, पाण्डुवर्णो वा; स्त्रियां **'हरिणी'** सुन्दरी छन्दोभेदो हरितवर्णा वा । अवति रक्षणादिकं करोतीति **अविनः**, अध्वर्युर्वा ।

**उदा०**—(1) श्येनः (= बाज)—श्यायति गच्छति । श्यैङ् गतौ । श्यै → श्या

'आदेच उपदेशेऽशिति' से आकार आदेश—श्या इनच्—'आद् गुणः' से गुण आदेश, सु।

(2) स्त्येनः (= चौर)—स्त्यायति शब्दयति। स्त्यै शब्दसङ्घातयोः। स्त्यै- पूर्ववत्।

(3) हरिणः (= मृग)—हरतीति। हृञ् हरणे। हृ इनच्—प्रत्यय की आर्धधातुक सञ्ज्ञा, 'सार्वधातुकार्धधातुकयोः' से गुण, 'उरण् रपरः' से रपरत्व, सु।

(4) अविनः (= अध्वर्यु)—अवति रक्षति। अव रक्षणादिषु। अव् इनच्-सु।

## (207) वृजेः किच्च [2.48]

**पद॰**—वृजेः 5.1, कित् 1.1, च—अव्य॰।

**अनु॰**—'श्यास्त्याहृञविभ्य इनच्' (उ॰सू॰ 2.47) से 'इनच्' की अनुवृत्ति है।

**सं॰**—वृज्धातोर् इनच्प्रत्ययः स्यात् स च कित्सञ्ज्ञः।

**व्याख्या**—वृज् धातु से इनच् प्रत्यय होता है और वह कित्सञ्ज्ञक होता है। प्रत्यय को कित् करने का प्रयोजन लघूपध गुण का निषेध करना है।

**स्वा॰द॰वृ॰**—इनच् कित्। वृक्ते वर्जयतीति **वृजिनः**, केशः पापं वक्रो वा।

**उदा॰**—(1) वृजिनम् (= पाप, केश, दुःख)—वृक्ते वर्जयति। वृजी वर्जने। वृज् इनच्—गुण का निषेध, सु।

## (208) अजेरज च [2.49]

**पद॰**—अजेः 5.1, अज 1.1, च—अव्य॰।

**अनु॰**—'श्यास्त्या···इनच्' (उ॰सू॰ 2.47) से 'इनच्' की अनुवृत्ति है।

**सं॰**—अज्धातोर् इनच् प्रत्ययः स्याद् धातोश्च 'अज' इत्यादेशो भवति।

**व्याख्या**—'अजेः' पद की आवृत्ति की जाती है। प्रथम 'अजेः' पद को पञ्चम्यन्त मानकर धातु से परे प्रत्यय किया जाता है। द्वितीय 'अजेः' पद को विभक्ति-विपरिणाम से षष्ठ्यन्त मानकर धातु को आदेश किया जाता है। 'अज' यह लुप्त प्रथमान्त रूप है। अर्थ—अज् धातु से परे इनच् प्रत्यय होता है तथा धातु के स्थान पर 'अज' आदेश होता है। 'अज' अनेकाल् है। 'अनेकाल्शित् सर्वस्य' से यह आदेश सम्पूर्ण स्थानी (अर्थात् अज्) के स्थान पर होता है। शङ्का—'अज्' के स्थान पर 'अज' आदेश व्यर्थ है। समा॰—'अजेर्व्यघञपोः' (पा॰ 2.4.53) से अज् के स्थान पर 'वी' आदेश प्राप्त था। उसके बाध के लिए अज् के स्थान पर 'अज' आदेश किया गया है।

**स्वा०द०वृ०**—अजति गच्छति क्षिपति वा तत् **अजिनम्,** चर्म वा। अजादेशो वीभावनिवृत्त्यर्थः।

**उदा०**—(1) अजिनम् (= मृगचर्म)—अजति गच्छति। अज गतिक्षेपणयोः। अज् इनच्—सु।

## (209) बहुलमन्यत्राऽपि [2.50]

**पद०**—बहुलम् 2.1, अन्यत्र-अव्य०, अपि—अव्य०।

**अनु०**—'श्यास्त्याहृञविभ्य इनच्' (उ०सू० 2.47) से 'इनच्' की अनुवृत्ति है।

**सं०**—पूर्वोक्तेभ्योऽन्येभ्यो धातुभ्यो बहुलम् इनच् प्रत्ययः स्यात्।

**व्याख्या**—पूर्व शास्त्र में उक्त धातुओं से अन्य धातुओं से भी इनच् प्रत्यय दृष्टिगोचर होता है।

**स्वा०द०वृ०**—कठति कृच्छ्रेण जीवतीति **कठिनम्,** कठोरं वा। कुण्डते दहतीति **कुण्डिनः**, ऋषिर्वा, यस्यापत्यं 'कौण्डिन्यः'। बर्हते प्रधानो भवतीति **बर्हिणः**, मयूरो वा। फलति विशीर्णो भवतीति **फलिनः**, फलवान् वृक्षो वा। नलति गन्धयुक्तो भवतीति **नलिनम्,** कमलं वा। मस्यति परिणमतीति **मसिनम्,** सुपिष्टं वा। मलते धरतीति **मलिनः**, मलयुक्तो वा। द्रुह्यति जिघांसतीति **द्रुहिणः**, ब्रह्मा वा। अन्धकारं द्यत्यवखण्डयतीति **दिनम्,** दिवसं वा। इनचः कित्त्वादाकारलोपः।

**उदा०**—(1) कठिनम् (= कठिन)—कठति कृच्छ्रेण जीवति। कठ् इनच्—अनुबन्धलोप—कठ् इन—सु।

(2) बर्हिणः (= मोर)—बर्हते। बृह् इनच्—लघूपध गुण, रपरत्व—'उरण् रपरः' से बर्ह् इन—णत्व, सु।

(3) कुण्डिलः (= ऋषि)—कुण्डते दहति। कुण्ड् इनच्—सु, विभक्तिकार्य।

(4) फलिनः (= वृक्ष)—फलति विशीर्णो भवति। फल् इनच्—सु।

(5) नलिनम् (= कमल)—नलति गन्धयुक्तो भवति। नल् इनच्—सु।

(6) मसिनम् (= अच्छी पीसी गई कज्जल)—मस्यति परिणमति। मस् इनच्।

(7) मलिनः (= मैला)—मलते धरति। मल् इनच्।

(8) दिनम् (= दिन)—द्यत्यवखण्डयत्यन्धकारम्। दो → दा—प्रत्यय के कित् होने से आकारलोप—द् इनच्—सु। दो अवखण्डने।

(9) द्रुहिणः (= ब्रह्मा)—द्रुह्यति जिघांसति। द्रुह् इनच्—णत्व, सु।

## (210) द्रुदक्षिभ्यामिनन् [2.51]

**पद०**—द्रुदक्षिभ्याम् 5.2, इनन् 1.1

**सं०**—द्रु दक्ष् इत्येताभ्यां धातुभ्याम् इनन् प्रत्ययः स्यात्।

**व्याख्या**—द्रु तथा दक्ष्—इन धातुओं से परे इनन् प्रत्यय होता है। न् अनुबन्ध आद्युदात्त स्वर के लिए है। द्र०—ञ्नित्यादिर्नित्यम्।

**स्वा०द०वृ०**—द्रवति गच्छति द्रुयते प्राप्यते वा तद् **द्रविणम्**, द्रव्यं सुवर्णं पराक्रमो वा। दक्षते वर्धते शीघ्रकारी भवति वा स **दक्षिणः**, सरलो अवामभागः परतन्त्राऽनुवर्त्तनश्च, स्त्रियां **दक्षिणा** दानं, प्रतिष्ठा वा।

**उदा०**—(1) द्रविणम् (= धन)—द्रवति गच्छति। द्रु गतौ। द्रु इनन्—'आर्धधातुकं शेषः' से इनन् की आर्धधातुक सञ्ज्ञा, 'सार्वधातुकार्धधातुकयोः' से गुण। द्रो इनन्—'एचोऽयवायावः' से अव् आदेश, णत्व, सु।

(2) दक्षिणः (= सरल, कुशल)—दक्षते वर्धते। दक्ष वृद्धौ शीघ्रार्थे च। दक्ष् इनन्—णत्व, सु।

(3) दक्षिणा (= दान, प्रतिष्ठा, उपहार)—दक्षिण टाप्—सवर्णदीर्घ। दक्षिणा सु—अपृक्त सकार का लोप। दिग्वाची 'दक्षिणा' शब्द 'दक्षिणा च' (फि०सू० 1.9) से अन्तोदात्त होता है। परन्तु इनन् प्रत्ययान्त 'दक्षिणा' शब्द आद्युदात्त है।

## (211) अर्त्तेः किदिच्च [2.52]

**पद०**—अर्त्तेः 5.1, कित् 1.1, इत् 1.1, च—अव्य०।

**अनु०**—'द्रुदक्षिभ्यामिनन्' (उ०सू० 2.51) से 'इनन्' की अनुवृत्ति है।

**सं०**—ऋधातोर् इनन् प्रत्ययः स्यात्, स च कित्सञ्ज्ञको, धातोश्च 'इत्' इत्यादेशो भवति।

**व्याख्या**—'अर्त्तेः' पद की आवृत्ति की जाती है। प्रथम 'अर्त्तेः' पद को पञ्चम्यन्त मानकर धातु से प्रत्यय किया जाता है। द्वितीय 'अर्त्तेः' पद को विभक्तिविपरिणाम से षष्ठ्यन्त मानकर धातु क़ो आदेश किया जाता है। प्रत्यय को कित् करने का प्रयोजन गुणनिषेध करना है। अर्थ—'ऋ' धातु से परे इनन् प्रात्यय होता है, 'इनन्' कित्-सञ्ज्ञक होता है तथा धातु को 'इत्' आदेश होता है। 'अलोऽन्त्यस्य' से इत् आदेश धातु के अन्त्य अल् (व्यपदेशिवद्भाव से ऋकार) के स्थान पर होता है।

**स्वा०द०वृ०**—ऋच्छन्ति गच्छन्ति यत्र यस्माद्वा जनास्तत् **इरिणम्**, शून्यम् ऊषरभूमिर्वा।

**उदा०**—(1) इरिणम् (= शून्य, बंजरभूमि)—ऋच्छन्ति गच्छन्ति यत्र (यस्माद् वा)। ऋ गतौ। ऋ → इत् आदेश, 'उरण् रपरः' से रपरत्व—इर् इनन्—इरिन—'अट्कुप्वाङ्नुम्०' से णत्व—इरिण सु।

**विशेष**—नारायण भट्ट प्रत्यय को कित् नहीं मानते हैं। द्र०—अर्त्तेरिच्च।

## (212) वेपितुह्योर्ह्रस्वश्च [2.53]

**पद०**—वेपितुह्योः 6.2, ह्रस्व: 1.1, च—अव्य०।

**अनु०**—'द्रुदक्षिभ्यामिनन्' (उ०सू० 2.51) से 'इनन्' का अनुवर्त्तन है।

**सं०**—वेप् तुह्—इत्येताभ्यां धातुभ्याम् इनन् प्रत्यय: स्याद् धातोश्च ह्रस्वाऽऽदेश: स्यात्।

**व्याख्या**—'वेपितुह्योः' पद षष्ठ्यन्त है। इसे विभक्तिविपरिणाम से पञ्चम्यन्त (यथा—वेपितुहिभ्याम्) बना लिया जाता है। अर्थ—वेप् तथा तुह् इन धातुओं से परे इनन् प्रत्यय होता है तथा धातु का जो अच् वर्ण, उसके स्थान पर ह्रस्वादेश होता है। ह्रस्वादि सञ्ज्ञाएँ अच् वर्णों की हुआ करती हैं। अत: वेप् में स्थित एकार को तथा तुह् में स्थित उकार को ह्रस्व आदेश प्राप्त होता है। 'एच इग्घ्रस्वादेशे' से एच् वर्ण (एकार) के स्थान पर इक् वर्ण ('स्थानेऽन्तरतम:' से इकार) होता है। शङ्का—उकार की ह्रस्व सञ्ज्ञा सिद्ध है। इसके स्थान पर ह्रस्वादेश विधान व्यर्थ है। समा०—तुह् इनन्—इस दशा में 'पुगन्तलघूपधस्य च' से लघूपध गुण प्राप्त था। इसके बाध के लिए उकार के स्थान पर ह्रस्व आदेश होकर उकार ही होता है। तब ह्रस्वादेश के विधानसामर्थ्य से लघूपध गुण प्राप्त नहीं होता है।

**स्वा०द०वृ०**—यत् वेपते कम्पते यत्र वा तद् **विपिनम्,** गहनं वा। तोहति गच्छति याचते वा तत् **तुहिनम्,** हिमं वा। गुणे कृते ह्रस्व:।

**उदा०**—(1) विपिनम् (= वाटिका)—वेपते कम्पते तत्। टुवेपृ कम्पने। वेप्—विप्—ह्रस्वादेश—विप् इन सु—अतोऽम्।

(2) तुहिनम् (= ओस, बर्फ)—तोहति गच्छति (याचते वा)। तुहिर् गतौ। तुह् इनन्—सु।

## (213) तलिपुलिभ्यां च [2.54]

**पद०**—तलिपुलिभ्याम् 5.2, च—अव्य०।

**अनु०**—'वेपितुह्योर्ह्रस्वश्च' (उ०सू० 2.53) से 'ह्रस्व:' का तथा 'द्रुदक्षिभ्यामिनन्' (उ०सू० 2.51) से 'इनन्' का अनुवर्त्तन है।

**सं०**—तल् पुल् इत्येताभ्यां धातुभ्याम् इनन् प्रत्यय: स्याद् धातोश्च ह्रस्वाऽऽदेश: स्यात्।

**व्याख्या**—'तलिपुलिभ्याम्' पञ्चम्यन्त पद है। 'तस्मादित्युत्तरस्य' की प्रवृत्ति होकर धातु से परे इनन् होता है। इसे विभक्तिविपरिणाम से षष्ठ्यन्त (यथा—

तलिपुल्योः) बनाकर धातु को ह्रस्वादेश होता है। अर्थ—तल् तथा पुल् धातुओं से परे इनन् प्रत्यय होता है तथा धातु को ह्रस्व आदेश होता है।

**स्वा०द०वृ०**—तालयति प्रतितिष्ठतीति **तलिनम्,** विरलं पृथग्भूतं स्वल्पं स्वच्छं वा। पोलयति महान् भवतीति **पुलिनम्,** जलसामीप्यं वा।

**उदा०**—(1) तलिनम् (= विरल, सूक्ष्म)—तालयति प्रतितिष्ठति। तल प्रतिष्ठायाम्। तल् इनन्—सु।

(2) पुलिनम् (= तट)—पोलयति महान् भवति। पुल महत्त्वे। पुल् इनन्—पोल् इन—गुण—पुल् इन—ह्रस्व आदेश, सु।

## (214) गर्वेरत उच्च [2.55]

**पद०**—गर्वेः 5.1, अतः 6.1, उत् 1.1, च—अव्य०।

**अनु०**—'द्रुदक्षिभ्यामिनन्' (उ०सू० 2.51) से 'इनन्' का अनुवर्त्तन है।

**सं०**—गर्व्धातोर् इनन् प्रत्ययः स्याद्, धातोश्च यो ह्रस्वोऽकारः तस्य स्थाने 'उत्' इत्यादेशः स्यात्।

**व्याख्या**—'गर्वेः' पञ्चम्यन्त पद है। 'तस्मादित्युत्तरस्य' से गर्व् से परे प्रत्यय होता है। विभक्तिविपरिणाम से 'गर्त्तेः' पद को षष्ठ्यन्त मानकर इसका 'अतः' पद के साथ अन्वय किया जाता है। उत् में तकार उच्चारणार्थ है। आदेश में तपरता व्यर्थ होकर सूचित करता है कि यहाँ 'त्' अनुबन्ध उच्चारणार्थ है। उत् = ह्रस्व उकार। अर्थ—गर्व् धातु से परे इनन् प्रत्यय होता है तथा गर्व् धातु का जो ह्रस्व अकार, उसके स्थान पर ह्रस्व उकार आदेश होता है।

**स्वा०द०वृ०**—गर्वति प्राप्नोति गर्वयति मुञ्चति वा सा **गुर्विणी,** गर्भिणी वा।

**उदा०**—(1) गुर्विणी (= गर्भिणी स्त्री)—गर्वति प्राप्नोति। गर्वयति मुञ्चति। गर्व् इनन्—गुर्व् इन—उकार आदेश—गुर्विन ई—'स्त्रियाम्' के अधिकार में ङीप् हुआ, अनुबन्धलोप, 'यस्येति च' से भसञ्ज्ञक अङ्ग के अकार का लोप—गुर्विन् ई—'अट्कुप्वाङ्नुम्व्यवाये० से णत्व, सु, हल्ङ्या०।

## (215) रुहेश्च [2.56]

**पद०**—रुहेः 5.1, च—अव्य०।

**अनु०**—'द्रुदक्षिभ्यामिनन्' (उ०सू० 2.51) से 'इनन्' का अनुवर्त्तन है।

**सं०**—रुह्धातोर् इनन् प्रत्ययो भवति।

**व्याख्या**—रुह् धातु से परे इनन् प्रत्यय होता है।

**स्वा०द०वृ०**—पातेरेव। पातीति **पाथः** जलम्।

**उदा०**—(1) पाथ: (= जल)—पातीति। पा रक्षणे। पा थुट् असुन्—पूर्ववत्।

## (649) अन्ने च [4.206]

**पद०**—अन्ने 7.1, च—अव्य०।

**अनु०**—'उदके थुट् च' (उ०सू० 4.205) से 'थुट्' का, 'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का तथा 'पातेर्बले जुट् च' (उ०सू० 4.204) से 'पातेः' का अनुवर्त्तन है।

**सं०**—अन्ने गम्यमाने पाधातोर् असुन्प्रत्ययः स्यात्, प्रत्ययस्य च 'थुट्' इत्यागमो भवति।

**व्याख्या**—यदि 'अन्न' अर्थ वाच्य हो तो 'पा' धातु से परे 'असुन्' प्रत्यय होता है तथा प्रत्यय को 'थुट्' आगम होता है। थुट् का 'थ्' शेष रहता है। 'आद्यन्तौ टकितौ' से थुट् आगम प्रत्यय का आद्यवयव बनता है।

**स्वा०द०वृ०**—थुट्। पाति रक्षतीति **पाथः** भक्तम्।

**उदा०**—(1) पाथ: (= भक्त)—पाति रक्षति। पा थुट् असुन्—पूर्ववत्।

## (650) अदेर्नुम्धौ च [4.207]

**पद०**—अदे: 5.1, नुम्धौ 1.2, च—अव्य०।

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का, 'अन्ने च' (उ०सू० 4.206) से 'अन्ने' का अनुवर्त्तन है।

**सं०**—अद्धातोर् असुन्प्रत्ययः स्यात्, धातोश्च धकारोऽन्तादेशो भवति, धातोर् 'नुम्' आगमो भवति।

**व्याख्या**—'अदे:' पद की आवृत्ति की जाती है। प्रथम 'अदे:' पद को पञ्चम्यन्त मानकर धातु से प्रत्यय किया जाता है। द्वितीय 'अदे:' पद को विभक्तिविपरिणाम से षष्ठ्यन्त मानकर धातु को आदेश किया जाता है। अर्थ—'अन्न' अर्थ वाच्य हो तो धातु से परे 'असुन्' प्रत्यय होता है, धातु को 'नुम्' आगम तथा धकार आदेश होते हैं। धकारस्थ अकार उच्चारणार्थ है। अथवा धकार का हल् रूप में निर्देश है। 'अलोऽन्त्यस्य' से धकार आदेश अद् धातु के अन्त्य अल् (दकार) के स्थान पर होता है। नुम् के मकार की इत्सञ्ज्ञा है। उकार उच्चारणार्थ है। 'न्' शेष रहता है। नुम् मित् है। 'मिदचोऽन्त्यात् परः' से नुम् अन्त्य अच् से परे होता है।

**स्वा०द०वृ०**—'अन्ने' इत्यनुवर्त्तते। अद्यते भक्ष्यते तद् **अन्धः**, अन्नमोदनो वा।

**उदा०**—(1) अन्धः (= अन्न)—अद्यते भक्ष्यते। अद भक्षणे। अद् असुन्—धकार अन्तादेश—अध् अस्—नुम् आगम—अन् ध् अस्—अनुबन्धलोप, सु, सकारलोप।

## (651) स्कन्देश्च स्वाङ्गे [4.208]

**पद०**—स्कन्देः 5.1, च—अव्य०, स्वाङ्गे 7.1

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का तथा 'अदेर्नुम्धौ च' (उ०सू० 4.207) से 'धः' का अनुवर्त्तन है।

**सं०**—स्कन्द्धातोर् असुन्प्रत्ययः स्याद्, धातोश्च धकारान्ताऽऽदेशः स्यात्।

**व्याख्या**—'स्कन्देः' पद की आवृत्ति की जाती है। प्रथम 'स्कन्देः' पद को पञ्चम्यन्त मानकर धातु से प्रत्यय किया जाता है। द्वितीय 'स्कन्देः' पद को विभक्ति-विपरिणाम से षष्ठ्यन्त मानकर धातु को आदेश किया जाता है। अर्थ—स्कन्द् धातु से परे असुन् प्रत्यय होता है तथा धातु को धकार आदेश होता है। धकार आदेश 'अलोऽन्त्यस्य' से धातु के अन्त्य अल् (दकार) के स्थान पर होता है।

**स्वा०द०वृ०**—स्कन्दते गच्छति चेष्टते शुष्यति वा येन तत् **स्कन्धः**, बाहुमूलं वृक्षावयवो वा। अकारान्तोऽप्ययम्।

**उदा०**—(1) स्कन्धः (= कन्धा)—स्कन्दते गच्छति येन। स्कन्दिर् गति-शोषणयोः। स्कन्द् असुन्—अनुबन्धलोप, धकार अन्तादेश—स्कन्ध् अस्—सु—अपृक्त सकार का लोप।

(2) स्कन्धः—अकारान्त रूप भी प्राप्त होता है।

## (652) आपः कर्माख्यायां ह्रस्वो नुट् च वा [4.209]

**पद०**—आपः 5.1, कर्माख्यायाम् 7.1, ह्रस्वः 1.1, नुट् 1.1, च—अव्य०, वा—अव्य०।

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का अनुवर्त्तन है।

**सं०**—आप्धातोर् असुन्प्रत्ययो भवति, धातोश्च ह्रस्वाऽऽदेशो विभाषया भवति, प्रत्ययस्य नुट् आगमश्च विभाषया भवति।

**व्याख्या**—'आपः' पद की पूर्ववत् आवृत्ति करके सूत्रार्थ किया जाता है। अर्थ—यदि 'कर्म' अर्थ वाच्य हो तो आप् धातु से परे असुन् प्रत्यय होता है तथा धातु को ह्रस्व आदेश विकल्प से होता है तथा प्रत्यय को नुट् आगम विकल्प से होता है।

नुट् का टकार इत्सञ्ज्ञक है। उकार उच्चारणार्थ है। 'न्' शेष रहता है। नुट् टित् है। प्रत्यय का आद्यवयव बनता है। 'आद्यन्तौ टकितौ'। ह्रस्वादि सञ्ज्ञाएँ अच् वर्णों की हुआ करती हैं। अतः आप् धातु के आकार के स्थान पर ह्रस्व आदेश प्राप्त है। 'स्थानेऽन्तरतमः' से आकार के स्थान पर अकार ह्रस्व आदेश होता है।

**स्वा०द०वृ०**—आप्यते सुखं येन तत् **अप्नः**; **अपः**, अपत्यं सुकर्म वा। ह्रस्वस्यापि विकल्पे—**'आपः'** इत्यपि भवति। **'आपोभिर्मार्जनं कृत्वा'** इत्यादिसत्प्रयोगदर्शनात्।

**उदा०**—(1) अप्नः (= अपत्य, सुकर्म)—आप्यते सुखं येन। आप्लृ व्याप्तौ। आप् असुन्—अनुबन्धलोप—आप् अस्—नुट् आगम, धातु को ह्रस्व आदेश—अप् न् अस्—सु, अपृक्त सकार का लोप।

(2) अपः—नुट् अभाव पक्ष, ह्रस्व आदेश पक्ष—आप्—अप् अस् सु।

(3) आपः—नुट् आगम अभाव पक्ष, ह्रस्व आदेश अभाव पक्ष, सु।

## (653) रूपे जुट् च [4.210]

**पद०**—रूपे 7.1, जुट् 1.1, च—अव्य०।

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का तथा 'आपः कर्माख्यायां ह्रस्वो०' (उ०सू० 4.209) से 'आपः' और 'ह्रस्वः' का अनुवर्त्तन है।

**सं०**—आप्धातोः असुन्प्रत्ययः स्याद् धातोश्च ह्रस्वादेशः स्यात्, प्रत्ययस्य 'जुट्' इत्यागमो भवति रूपे गम्यमाने।

**व्याख्या**—यदि 'रूप' अर्थ वाच्य हो तो आप् धातु से परे असुन् प्रत्यय होता है, धातु को ह्रस्व आदेश होता है तथा प्रत्यय को 'जुट्' आगम होता है। 'ट्' इत्सञ्ज्ञक है। उकार उच्चारणार्थ है। 'ज्' शेष रहता है। जुट् टित् है। 'आद्यन्तौ टकितौ' से 'जुट्' आगम प्रत्यय का आद्यवयव बनता है।

**स्वा०द०वृ०**—आप इत्येव। आप्यते यत् तद् **अब्जः** रूपम्; अद्भ्यो जात इति निर्वचने **अब्जः** कमलं वा।

**उदा०**—(1) अब्जः (= रूप, कमल)—आप्यते यत्। आप् असुन्—आप् जुट् असुन्—अनुबन्धलोप—आप् ज् अस्—ह्रस्व आदेश—अप् जस्—पकार को बकार—अब् जस् सु—अपृक्त सकार का लोप।

## (654) उदके नुम्भौ च [4.211]

**पद०**—उदके 7.1, नुम्भौ 1.2, च—अव्य०।

**अनु०**—'सर्वधातुकेऽसुन्' (उ०सू० 4.190) से 'असुन्' का तथा 'आपः कर्माख्यायां ह्रस्वो नुट् च' (उ०सू० 4.208) से 'आपः' और 'ह्रस्वः' का अनुवर्त्तन है।

**सं०**—उदके गम्यमाने आप्धातोर् असुन्प्रत्ययः स्याद्, धातोश्च भकारा-ऽन्तादेशो ह्रस्वादेशः नुमागमश्च भवन्ति।

**व्याख्या**—'उदक' अर्थ वाच्य हो तो आप् धातु से परे असुन् प्रत्यय होता है तथा धातु को नुम् आगम, ह्रस्व आदेश और भकार आदेश होते हैं। 'अलोऽन्त्यस्य' से भकार आदेश धातु के अन्त्य अल् (पकार) के स्थान पर होता है। नुम् का 'न्' शेष रहता है। 'मिदचोऽन्त्यात् परः' से नुम् आगम अन्त्य अच् से परे होता है।

**स्वा०द०वृ०**—आप इत्येव। आप्यते तत् **अम्भः** उदकम्। अम्भसा वर्त्तते इति **'आम्भसिकः'** मत्स्यः।

**उदा०**—(1) अम्भः (= जल)—आप्यते तत्। आप् → अप् ह्रस्वादेश—अन् भ्—नुम् आगम, 'नश्चाऽपदान्तस्य झलि' से अनुस्वार—अंभ् अस्—'अनुस्वारस्य ययि परसवर्णः' से परसवर्ण—अम्भस् सु—अपृक्त सकार का लोप।

(2) आम्भसिकः—अम्भसा वर्त्तते। अम्भस् इक—आदिवृद्धि, सु। 'ओजः-सहोम्भसा वर्त्तते' (पा० 4.4.27) से ठक्।

## (655) नहेर्दिवि भश्च [4.212]

**पद०**—नहेः 5.1, दिवि 7.1, भः 1.1, च—अव्य०।

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का अनुवर्त्तन है।

**सं०**—दिवि गम्यमाने नह्धातोर् असुन्प्रत्ययः स्याद्, धातोश्च भकारोऽन्तादेशः स्यात्।

**व्याख्या**—यदि 'अन्तरिक्ष' अर्थ वाच्य हो तो नह् धातु से परे असुन् प्रत्यय होता है तथा धातु को भकार आदेश होता है। भकारस्थ अकार उच्चारणार्थ है। 'अलोऽन्त्यस्य' से भकार आदेश धातु के अन्त्य अल् (हकार) के स्थान पर होता है।

**स्वा०द०वृ०**—नह्यति घर्मं बध्नातीति **नभः**, मेघधूल्यादियुक्त आकाशः श्रावणमासो वा; नभोऽस्मिन् शुद्धमस्तीति **'नभस्यः'** भाद्रो मासः।

**उदा०**—(1) नभः (= अन्तरिक्ष, श्रावण मास)—नह्यति धर्मं बध्नाति। णह बन्धने। 'णो नः' (पा० 6.1.62) से णकार के स्थान पर नकार होता है—नह् असुन्—अनुबन्धलोप, धातु को भकार अन्तादेश—नभ् अस् सु—अपृक्त सकार का लोप।

(2) नभस्यः (= भाद्रपद मास)—'मत्वर्थे मासतन्वोः' (पा० 4.4.128)।

## (656) इण आगोऽपराधे च [4.213]

**पद०**—इणः 5.1, आगः 1.1, अपराधे 7.1, च—अव्य० ।

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का अनुवर्त्तन है।

**सं०**—अपराधे गम्यमाने 'इ'धातोर् असुन्प्रत्ययो भवति, धातोश्च स्थाने 'आग' इत्यादेशो भवति ।

**व्याख्या**—'इणः' पद की आवृत्ति की जाती है। प्रथम 'इणः' पद को पञ्चम्यन्त मानकर धातु से प्रत्यय किया जाता है। द्वितीय 'इणः' पद को विभक्तिविपरिणाम से षष्ठ्यन्त बनाकर धातु को आदेश किया जाता है। अर्थ—'इ' धातु से परे 'असुन्' प्रत्यय होता है तथा धातु के स्थान पर 'आग' आदेश होता है, यदि 'अपराध' अर्थ वाच्य हो। 'आग' अनेकाल् है। 'अनेकाल् शित् सर्वस्य' से 'आग' आदेश समग्र स्थानी (अर्थात् इ) के स्थान पर होता है।

**स्वा०द०वृ०**—ईयते प्राप्यते ज्ञायते वा तत् **आगः**, अपराधो दण्डो वा ।

**उदा०**—(1) आगः (= अपराध, पाप, दण्ड)—ईयते प्राप्यते (दुःखं येन) तत्। इण् गतौ। इ—आग असुन्—'शकन्ध्वादिषु पररूपं वाच्यं तच्च टेः' (वा०) से पररूप—आगस् सु—'स्वमोर्नपुंसकात्' से सुलुक्—आगस्—रु, विसर्ग।

## (657) अमेर्हुक् च [4.214]

**पद०**—अमेः 5.1, हुक् 1.1, च—अव्य० ।

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का अनुवर्त्तन है।

**सं०**—अम्धातोर् असुन्प्रत्ययो भवति, धातोश्च 'हुक्' इत्यागमो भवति ।

**व्याख्या**—अम् धातु से परे असुन् प्रत्यय होता है तथा धातु को हुक् आगम होता है। 'क्' की इत्सञ्ज्ञा है। उकार उच्चारणार्थ है। 'ह्' शेष रहता है। हुक् कित् है। 'आद्यन्तौ टकितौ' से धातु का अन्ताऽवयव बनता है। असुन् का 'अस्' शेष रहता है।

**स्वा०द०वृ०**—अमन्ति प्राप्नुवन्ति दुःखं येन तत् **अंहः**, पापं वा ।

**उदा०**—(1) अंहः (= पाप)—अमन्ति प्राप्नुवन्ति (दुःखं येन)। अम गतौ। अम् हुक् असुन्—अनुबन्धलोप—अम् ह् अस्—'नश्चाऽपदान्तस्य०' (पा० 8.3.24) से अनुस्वार—अंहस् सु—'स्वमोर्नपुंसकात्' (पा० 7.1.33) से सुलुक्, रुत्व, विसर्ग।

## (658) रमेश्च [4.215]

**पद०**—रमेः 5.1, च—अव्य० ।

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का तथा 'अमेर्हुक् च' (उ०सू० 4.214) से 'हुक्' का अनुवर्त्तन है।

**सं०**—रम्धातोर् असुन्प्रत्ययः स्यात्, धातोश्च 'हुक्' इत्यागमः स्यात्।

**व्याख्या**—रम् धातु से परे असुन् प्रत्यय होता है तथा धातु को 'हुक्' आगम होता है। 'ह्' शेष रहता है। 'हुक्' आगम धातु का अन्ताऽवयव बनता है।

**स्वा०द०वृ०**—चात् हुक्। रमते येन तत् **रंहः**, वेगो वा।

**उदा०**—(1) रंहः (= वेग)—रमते येन तत्। रमु क्रीडायाम्। रम् हुक् असुन्—अनुबन्धलोप—रम् ह् अस्—'नश्चाऽपदान्तस्य०' से अनुस्वार—रंहस् सु—'स्वमोर्नपुंसकात्' से सुलुक्—रंहस्—रुत्व, विसर्ग।

## (659) देशे ह च [4.216]

**पद०**—देशे 7.1, ह 1.1, च—अव्य०।

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का तथा 'रमेश्च' (उ०सू० 4.215) से 'रमेः' का अनुवर्त्तन है।

**सं०**—देशे गम्यमाने रम्धातोर् असुन्प्रत्ययः स्याद्, धातोश्च हकाराऽऽदेशः स्यात्।

**व्याख्या**—यदि 'देश' अर्थ वाच्य हो तो रम् धातु से परे असुन् प्रत्यय होता है तथा धातु को हकार आदेश होता है। हकारस्थ अकार उच्चारणार्थ है। 'ह' यह लुप्तप्रथमान्त पद है। 'ह सु' इस दशा में 'सुपां सुलुक्पूर्वसवर्ण०' (पा० 7.1.39) से सुप् विभक्ति का लुक् होता है। 'अलोऽन्त्यस्य' से हकार आदेश रम् धातु के अन्त्य अल् (मकार) के स्थान पर होता है।

**स्वा०द०वृ०**—चाद् रमेरसुन् [ हकारश्चान्तादेशः ]। रमन्तेऽस्मिन्निति **रहः**, एकान्तो विश्वासदेशो वा; रह एकान्ते भवं **'रहस्यम्'** वेदान्तं वा। देशादन्यत्र **'रहः'** अव्ययं शब्दान्तरं वास्ति। **रहो** मैथुनसमयस्तत्र भवं **'रहस्यम्'** मैथुनम्। **दिगादित्वाद्** (द्रष्टव्य—अ० 4.3.54) यत्।

**उदा०**—(1) रहः (= एकान्त)—रमन्तेऽस्मिन्। रम् → रह् असुन्—अनुबन्धलोप—रहस् सु—'स्वमोर्नपुंसकात्' से सुलुक्, रुत्व, विसर्ग।

(2) रहस्यम्—रहसि भवो—रहस् यत् (द्रष्टव्य—दिगादिभ्यो यत्—पा० 4.3.54)।

## (660) अञ्च्यञ्जियुजिभृजिभ्यः कुश्च [4.217]

**पद०**—अञ्च्यञ्जियुजिभृजिभ्यः 5.3, कुः 1.1, च—अव्य०।

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का अनुवर्त्तन है।

**सं०**—अञ्च् अञ्ज् युज् भृज्—इत्येतेभ्यो धातुभ्योऽसुन् स्याद् धातोश्च कुत्वं स्यात्।

**व्याख्या**—अञ्च्, अञ्ज्, युज् और भृज्—इन धातुओं से परे असुन् प्रत्यय होता है तथा धातु को 'कु' आदेश होता है। कु = कवर्गीय वर्ण, जो पाँच हैं। यथा—क्, ख्, ग्, घ् और ङ्। 'अलोऽन्त्यस्य' से धातु के अन्त्य अल् के स्थान पर कुत्व आदेश होता है। 'असुन्' का 'अस्' शेष रहता है।

**स्वा०द०वृ०**—अञ्चति गच्छति येन तत् **अङ्कः**, सङ्ख्याद्योतकं चिह्नं वा। अनक्ति व्यक्तीकरोतीति **अङ्गः** पक्षी वा। अवयवे **'अङ्ग'**शब्दोऽदन्तः। युज्यते स **योगः**, समाधिः कालो वा। भर्जति पक्वं भवतीति **भर्गः**, प्रजापतिः तेजो वा।

**बाहुलकात्**—उच्यते यत्र तत् **ओकः**, स्थानं वा। **न्यङ्क्वादित्वात्** कुत्वम्।

**उदा०**—(1) अङ्कः (= अङ्क)—अञ्चति गच्छति। अञ्चु गतौ। अञ्च् असुन्—कुत्व—अञ् क् अस्—'स्थानेऽन्तरतमः' (पा० 1.1.50) से चकार के स्थान पर कवर्गीय ककार आदेश हुआ, 'निमित्ताऽपाये नैमित्तिकस्याऽप्यपायः' से निमित्त (चकार) के हट जाने पर नैमित्तिक (ञकार) की निवृत्ति हुई, ञकार अपने मूल स्वरूप (अनुस्वार) को प्राप्त हुआ, 'अनुस्वारस्य ययि०' (पा० 8.4.57) से परसवर्ण—अङ्कस् सु—सुलुक्, रुत्व, विसर्ग।

(2) अङ्गः (= पक्षी)—अनक्ति व्यक्तीकरोति। अञ्जु व्यक्तीकरणादिषु। अञ्ज् असुन्—अञ्ज् अस्—अञ्ग् अस्—अंग् अस्—अङ्ग् अस् सु—पूर्ववत्।

(3) योगः (= मेलन)—युज्यत इति। युजिर् योगे। युज् असुन्—'पुगन्तलघूपधस्य च' (पा० 7.3.86) से लघूपध गुण—योज् अस्—कुत्व, सु, विभक्तिकार्य।

(4) भर्गः (= तेज)—भर्जतीति। भृजी भर्जने। भृज् असुन्—लघूपध गुण, रपरत्व—भर्ज् अस्—कुत्व—भर्गस् सु—विभक्ति कार्य।

(5) ओकः (= घर)—उच्यते यत्र। बाहुलकात् असुन् प्रत्यय। न्यङ्क्वादि होने से कुत्व—ओक् असुन् सु—विभक्तिकार्य। (द्रष्टव्य—'न्यङ्क्वादीनां च' पा० 7.3.53)

## (661) भूरञ्जिभ्यां कित् [4.218]

**पद०**—भूरञ्जिभ्याम् 5.2, कित् 1.1

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का अनुवर्त्तन है।

**सं०**—भू रञ्ज्—इत्येताभ्यां धातुभ्याम् असुन्प्रत्ययः स्यात्, स च कित्सञ्ज्ञः स्यात्।

**व्याख्या**—भू तथा रञ्ज्—इन धातुओं से परे असुन् प्रत्यय होता है तथा वह कित्सञ्ज्ञक होता है। प्रत्यय को कित् करने के दो प्रयोजन हैं—(i) आर्धधातुक गुण का निषेध तथा (ii) अनुनासिकलोप।

**स्वा०द०वृ०**—भवन्ति यस्मिन्निति **भुवः**, अन्तरिक्षं वा। रजति तत् **रजः**, लोकः सूक्ष्मधूलिः स्त्रीपुष्पं गुणो वा। अकारान्तश्च [ 'रज' शब्दः ]।

**उदा०**—(1) भुवः (= अन्तरिक्ष)—भवन्ति यस्मिन्। भू सत्तायाम्। भू असुन्—अनुबन्धलोप—भू अस्—गुणनिषेध, 'अचि श्नुधातुभ्रुवां०' (पा० 6.4.77) से उवङ् आदेश—भुवस् सु—सुलोप, रुत्व, विसर्ग।

(2) रजः (= धूल, स्त्रीपुष्प)—रजति तत्। रञ्ज रागे। रञ्ज् असुन्—'अनिदितां हल उपधाया०' (पा० 6.4.24) से अनुनासिकलोप—रजस् सु—पूर्ववत्। 'रजस्' शब्द का भीमादिगण में पाठ है। द्रष्टव्य—'भीमादयोऽपा०' (पा० 3.4.74)। अतः अपादान में प्रत्यय होता है। अकारान्त 'रज' शब्द भी होता है।

## (662) वसेर्णित् [4.219]

**पद०**—वसेः 5.1, णित् 1.1

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से **'असुन्'** का अनुवर्त्तन है।

**सं०**—वस्धातोर् असुन्प्रत्ययः स्यात्, स च णित्सञ्ज्ञः।

**व्याख्या**—वस् धातु से परे असुन् प्रत्यय होता है और वह णित्सञ्ज्ञक होता है। णित्करण वृद्धि आदेश के लिए है।

**स्वा०द०वृ०**—वस्त आच्छादयति शरीरादिकमनेन तत् **वासः**, वस्त्रं वा। असुनो णिद्वद्भावाद् वृद्धिः।

**उदा०**—(1) वासः (= वस्त्र)—वस्त आच्छादयति। वस आच्छादने। वस् असुन्—अनुबन्धलोप—वस् अस्—'अत उपधायाः' (पा० 7.2.116) से उपधा-वृद्धि—वासस् सु—'स्वमोर्नपुंसकात्' (पा० 7.1.23) से सुलुक्, रुत्व, विसर्ग।

## (663) चन्देरादेश्च छः [4.220]

**पद०**—चन्देः 5.1, आदेः 6.1, च—अव्य०। छः 1.1

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से **'असुन्'** का अनुवर्त्तन है।

**सं०**—चन्द्धातोर् असुन्प्रत्ययो भवति, धातोश्च आदेः छकाराऽऽदेशः स्यात्।

**व्याख्या**—'चन्देः' पद की आवृत्ति की जाती है। प्रथम 'चन्देः' पद को पञ्चम्यन्त मानकर धातु से प्रत्यय किया जाता है। द्वितीय 'चन्देः' पद को विभक्ति

विपरिणाम से षष्ठ्यन्त बनाकर धातु को आदेश किया जाता है। अर्थ—चन्द् धातु से परे 'असुन्' प्रत्यय होता है तथा धातु के आदि वर्ण के स्थान पर छकार आदेश होता है। छकारस्थ अकार उच्चारणार्थ है।

**स्वा०द०वृ०**—चन्दति ह्रष्यति येन दीप्यते वा तत् **छन्दः**, गायत्र्यादि कपटमिच्छाऽभिप्रायो वशो वा। **'छन्दानुवृत्तिः'** इत्यादिप्रयोगदर्शनादकारान्तोऽप्ययं शब्द इति मन्तव्यम्।

**उदा०**—(1) छन्द: (= छन्द, छल)—चन्दति ह्रष्यति येन। चदि आह्लादने। 'इदितो नुम् धातो:' (पा० 7.1.58) से नुम् आगम—च न् द्—'नश्चाऽपदान्तस्य०' (पा० 8.3.24) से अनुस्वार—चंद्—'अनुस्वारस्य ययि०' (पा० 8.4.57) से परसवर्ण—चन्द् → छन्द्—आदि वर्ण (चकार) को छकार आदेश—छन्द् असुन् सु—पूर्ववत्।

यदि सूत्र में 'आदे:' पद का ग्रहण न करते तो छकार आदेश 'अलोऽन्त्यस्य' से दकार के स्थान पर प्राप्त होता जो इष्ट नहीं है।

## (664) पचिवचिभ्यां सुट् च [4.221]

**पद०**—पचिवचिभ्याम् 5.2, सुट् 1.1, च—अव्य०।

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का अनुवर्त्तन है।

**सं०**—पच् वच्—इत्येताभ्यां धातुभ्याम् असुन्प्रत्यय: स्यात्, प्रत्ययस्य च 'सुट्' इत्यागमो भवति।

**व्याख्या**—पच् तथा वच् धातु से परे असुन् प्रत्यय होता है तथा प्रत्यय को 'सुट्' आगम होता है। टकार इत्सञ्ज्ञक है। उकार उच्चारणार्थ है। 'स्' शेष रहता है। 'सुट्' टित् आगम है। अत: 'आद्यन्तौ टकितौ' से यह प्रत्यय असुन् का आद्यवयव बनता है।

**स्वा०द०वृ०**—पचतीति **पक्षः**, पूर्वोत्तरपक्षो वा। वक्ति येन तद् **वक्षः**, हृदयं वा।

**उदा०**—(1) पक्ष: (= पक्ष, इन्धन)—पचतीति। डुपचष्—हलन्त्यम्, आदिर्ञिटुडव:—पच् सुट् असुन्—अनुबन्धलोप—पच् स् अस्—'चो: कु:' (पा० 8.2.30) से चकार को ककार—पक् स् अस्—'आदेशप्रत्यययो:' से सकार को मूर्धन्य आदेश—पक् ष् अस् सु—विभक्तिकार्य।

(2) वक्ष: (= छाती)—वक्ति येन। वच परिभाषणे। वच् सुट् असुन्—पूर्ववत्।

## (665) वहिहाधाञ्भ्यश्छन्दसि [4.222]

**पद०**—वहिहाधाञ्भ्यः 5.3, छन्दसि 7.1

**अनु०**—'सर्वधातुभ्योऽसुन्' (उ०सू० 4.190) से 'असुन्' का तथा 'पचिवचिभ्यां सुट् च' (उ०सू० 4.221) से 'सुट्' का अनुवर्त्तन है।

**सं०**—वह् हा धा—इत्येतेभ्यो धातुभ्योऽसुन्प्रत्ययः स्याच्छन्दसि विषये।

**व्याख्या**—वेद के विषय में वह्, हा तथा धा—इन धातुओं से परे 'असुन्' प्रत्यय होता है, प्रत्यय को 'सुट्' आगम होता है। 'असुन्' का 'अस्' शेष रहता है।

**स्वा०द०वृ०**—सुट्। वहति भारमिति **वक्षाः**, अनड्वान् वा। हीयते हीनो भवतीति **हासाः**, चन्द्रमा वा। दधातीति **धासाः**, पर्वतो वा।

**उदा०**—(1) वक्षाः (= बैल)—वहति भारम्। वह प्रापणे। वह् सुट् असुन्—अनुबन्धलोप—वह् स् अस्—'हो ढः' (पा० 8.2.31) से ढकार—वढ् स् अस्—'षढोः कः सि' (पा० 8.2.41) से ककार—वक् स् अस्—'आदेशप्रत्यययोः' (पा० 8.3.59) से सकार को मूर्धन्य आदेश—वक्षस् सु—'सान्तमहतः संयोग०' (पा० 6.4.10) से उपधादीर्घ, अपृक्त सकार का लोप—व क्षास् स्—वक्षास्—रुत्व, विसर्ग।

(2) हासाः (= चन्द्र)—हीयत इति। ओहाक् त्यागे। हा सुट् असुन्—पूर्ववत्।

(3) धासाः (= अचल)—दधातीति। डुधाञ् धारणपोषणयोः। धा सुट् असुन्—पूर्ववत्।

**विशेष**—वेदभाष्यकार प्रकृत सूत्र में 'सुट्' पद की अनुवृत्ति के पक्षधर नहीं हैं। यथा—'विश्वधायाः' शब्द को धा धातु से असुन् प्रत्यय तथा युक् आगम करके निष्पन्न किया गया है। 'यज्ञवाहसः' प्रयोग की सिद्धि में आचार्य सायण (द्रष्टव्य—ऋ०भा० सायण, 1.16.11) ने सुट् आगम नहीं किया है। उन्होंने यहाँ णित् का अनुवर्त्तन करते हुए 'अत उपधायाः' से उपधावृद्धि की है। प्रकृत में सुट् आगम के बिना धायः, वाहः, हायः आदि रूप निष्पन्न होते हैं।

## (666) इणश्चासिः [4.223]

**पद०**—इणः 5.1, च—अव्य०, आसिः 1.1

**सं०**—इधातोर् आसिप्रत्ययः स्यात्।

**व्याख्या**—'इ' धातु से परे 'आसि' प्रत्यय होता है। सकारस्थ इकार उच्चारणार्थ है।

**स्वा०द०वृ०**—एति प्राप्नोतीति **अया:**, अग्निर्वा। **स्वरादित्वात्** (द्रष्टव्य—अ० 1.1.36) अव्ययम्। अत एव दीर्घादिरासि: प्रत्यय:।

**उदा०**—(1) अया: (= अग्नि)—एतीति। इण् गतौ। इ आसि—'आर्धधातुकं शेष:' (पा० 3.4.114) से आर्धधातुक सञ्ज्ञा। ए आस्—'सार्वधातुकार्धधातु०' (पा० 7.3.84) से गुण—अय् आस्—'एचोऽयवायाव:' से अय् आदेश—अयास् सु—अव्यय होने से 'अव्ययादाप्सुप:' (पा० 2.4.82) से सुलुक्, रुत्व, विसर्ग।

## (667) मिथुनेऽसि: [4.224]

**पद०**—मिथुने 7.1, असि: 1.1

**सं०**—सोपसर्गेभ्यो धातुभ्योऽसिप्रत्यय: स्यात्।

**व्याख्या**—उपसर्गयुक्त धातु से परे 'असि' प्रत्यय होता है। सकारस्थ इकार उच्चारणार्थ है।

**स्वा०द०वृ०**—यत्रोपसर्गो धातुक्रियया संयुक्तस्तन्मिथुनम्। तत्र सति येभ्यो धातुभ्योऽसुन् विधीयते तेभ्य: सर्वेभ्योऽसिरेव स्यात्। [पूर्ववच्च सर्वमिति वचनात् प्रकृतिप्रत्यययोगआगमादेशाश्च पूर्ववदेव द्रष्टव्या:।] स्वरभेदार्थं सूत्रमिदम्। **सुपया:, सुतपा:, सुयशा:, न्योजा:, सुजवा:, सुस्रोता:** इत्यादयो द्रष्टव्या:।

**उदा०**—(1) सुपया: (= सुजल)—सु पा असि—सु पी अस्—सु पे अस्—अय् आदेश—सुपेयस् सु—'सान्तमहत: संयोग०' से उपधादीर्घ, अपृक्त सकारलोप।

(2) सुतपा: (= सुद्वन्द्व)—सुष्ठु तपतीति। सु तप् असि—सुतपस् सु—विभक्तिकार्य।

(3) सुयशा: (= सुन्दर यश)—शोभनम् अश्नुते। 'अशेर्धने युट् च'। धातु को युट् आगम, असि प्रत्यय।

(4) सुपेशा: (= सुरूप)—सु पेशस् सु—पूर्ववत्।

(5) न्योजा: (= सुवर्चा)—न्योजस् सु—पूर्ववत्।

(6) सुजवा: (= सुवेग)—सुजवस् सु—पूर्ववत्।

(7) सुस्रोता: (= सुनिर्झर)—शोभनं स्रवतीति। 'स्रुरीभ्यां तुट् च' से तुट् आगम।

(8) सुवर्चा:—सुष्ठु वर्चते। सु वर्च दीप्तौ असि।

## (668) नञि हन एह च [4.225]

**पद०**—नञि 7.1, हन: 5.1, एह 1.1, च—अव्य०।

**अनु०**—'मिथुनेऽसि:' (उ०सू० 4.224) से 'असि:' का अनुवर्त्तन है।

**सं०**—नञि उपपदे हन्धातोर् असिप्रत्ययः स्याद् धातोश्च स्थाने 'एह' इत्यादेशः स्यात्।

**व्याख्या**—'हनः' पद की आवृत्ति की जाती है। प्रथम 'हनः' पद को पञ्चम्यन्त मानकर धातु से परे प्रत्यय किया जाता है। द्वितीय 'हनः' पद को विभक्तिविपरिणाम के द्वारा षष्ठ्यन्त बना लिया जाता है। इसका 'एह' के साथ अन्वय किया जाता है। अर्थ—यदि 'नञ्' उपपद हो तो हंन् धातु से परे 'असि' प्रत्यय होता है और धातु के स्थान पर 'एह' आदेश होता है। 'एह' लुप्तप्रथमान्त पद है। 'एह सु'—इस दशा में 'सुपां सुलुक्पूर्वसवर्ण०' (पा० 7.1.39) से 'सु' विभक्ति का लुक् है। 'एह' अनेकाल् है। 'अनेकाल् शित् सर्वस्य' से 'एह' आदेश सम्पूर्ण स्थानी (हन् धातु) के स्थान पर होता है। हकारस्थ अकार उच्चारणार्थ है।

**स्वा०द०वृ०**—न हन्यते विच्छिन्नो न भवतीति **अनेहाः**, कालो वा; **अनेहसौ, अनेहसः**।

**उदा०**—(1) अनेहाः (= काल)—न हन्यते। नञ् हन हिंसागत्योः। नञ् हन्—एह असि—अनुबन्धलोप—न एह् अस्—'नलोपो नञः' (पा० 6.3.73) से नकारलोप—अ एह् अस्—'तस्मान्नुड् अचि' (पा० 6.3.75) से 'नुट्' आगम—अनुट् एह् अस्—अनुबन्धलोप—अनेहस् सु—'सान्तमहतः संयोग०' (पा० 6.4.10) से उपधादीर्घ। अनेहास् स्—अपृक्त सकार का लोप—अनेहास्—रुत्व, विसर्ग।

## (669) विधाञो वेध च [4.226]

**पद०**—विधाञः 5.1, वेध 1.1, च—अव्य०।

**अनु०**—'मिथुनेऽसिः' (उ०सू० 4.224) से 'असिः' का अनुवर्त्तन है।

**सं०**—वौ उपपदे धाधातोर् असिप्रत्ययः स्याद्, धातोश्च 'वेध' इत्यादेशः स्यात्।

**व्याख्या**—'विधाञः' पद की आवृत्ति करके सूत्रार्थ किया जाता है। वि पूर्वक धा धातु से परे असि प्रत्यय होता है तथा धातु के स्थान पर 'वेध' आदेश होता है। 'वेध' अनेकाल् है। 'अनेकाल् शित् सर्वस्य' से 'वेध' आदेश सम्पूर्ण स्थानी (अर्थात् विपूर्वक धा) के स्थान पर होता है। 'वेध' लुप्तप्रथमान्त रूप है। 'वेध' के धकार में स्थित अकार उच्चारणार्थ है।

**स्वा०द०वृ०**—विशेषेण दधातीति **वेधाः**, विद्वान् विधाता जगदीश्वरो वा; **वेधसौ; वेधसः; वेधसम्**।

**उदा०**—(1) वेधाः (= विद्वान्, ब्रह्मा)—विशेषेण दधातीति। वि डुधाञ् असि—वेध् असि—वेधस् सु।

## (670) नुवो धुट् च [4.227]

**पद०**—नुवः 5.1, धुट् 1.1, च—अव्य० ।

**अनु०**—'मिथुनेऽसिः' (उ०सू० 4.224) से 'असिः' का अनुवर्त्तन है।

**सं०**—नुधातोर् असिप्रत्ययः स्यात्, प्रत्ययस्य 'धुट्' इत्यागमः स्यात्।

**व्याख्या**—'नु' धातु से परे असि प्रत्यय होता है तथा प्रत्यय को 'धुट्' आगम होता है। टकार 'हलन्त्यम्' से इत्सञ्ज्ञक है। उकार उच्चारणार्थ है। 'ध्' शेष रहता है। 'धुट्' आगम टित् है। 'आद्यन्तौ टकितौ' से धुट् आगम प्रत्यय का आद्यवयव बनता है।

**स्वा०द०वृ०**—नौति स्तौति नूंयते स्तूयते वा स **नोधाः**, ऋषिर्वा।

**उदा०**—(1) नोधाः (= ऋषि)—नौति स्तौति स्तूयते वा। णु स्तुतौ। 'णो नः' से नकार—नु धुट् अस्—अनुबन्धलोप—नु ध स्—'सार्वधातुकार्धधातुक०' से गुण। नोधस् सु—विभक्तिकार्य।

## (671) गतिकारकोपपदयोः पूर्वपदं प्रकृतिस्वरत्वं च [4.228]

**पद०**—गतिकारकोपपदयोः 7.2, पूर्वपदम् 1.1, प्रकृतिस्वरत्वम् 1.1, च—अव्य०।

**अनु०**—'मिथुनेऽसिः' (उ०सू० 4.224) से 'असिः' का अनुवर्त्तन है।

**सं०**—गतिकारकयोर् उपपदयोर् धातोर् असिप्रत्ययः स्यात्, तस्मिन् सति गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं स्यात्।

**व्याख्या**—गतिसञ्ज्ञक अथवा कारक शब्द के उपपद रहते धातु से परे प्रत्यय होता है तथा इनके (अर्थात् गति और कारक के) उपपद रहते प्रकृतिस्वर होता है। यह 'गतिकारकोपपदात् कृत्' (पा० 6.2.138) से प्राप्त उत्तरपद प्रकृतिस्वर का अपवाद है।

**स्वा०द०वृ०**—गतिकारकोपपदाद्धातोरसिः प्रत्ययो भवति, तस्मिन् सति गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वम्। उत्तरपदप्रकृतिस्वरस्यापवादः। गतौ—**सुतपाः, सुतेजाः, सुवक्षाः**। कारके—**उग्रतेजाः, हिरण्यरेताः, जातवेदाः, सर्ववेदाः, विश्ववेदाः**। वृद्धेभ्यः शृणोतीति **वृद्धश्रवाः**। विष्टर आसने शृणोतीति **विष्टरश्रवाः** इत्यादि।

**उदा०**—(1) सुतपाः (= सम्यक् तप्त)—सुष्ठु तपतीति। सु तप् अस्—सुतपस् सु—'सान्तमहतः०' से उपधादीर्घ—सुतपास् सु—अपृक्त सकारलोप।

(2) सुतेजाः (= वर्चस्वी)—सुतेजस् सु—पूर्ववत्।

(3) सुवक्षाः (= चौड़ी व सुन्दर छाती वाला)—सुवक्षस् सु—पूर्ववत्।
(4) उग्रतेजाः (= प्रचण्ड तेज वाला)—उग्रतेजस् सु—पूर्ववत्।
(5) हिरण्यरेताः (= ब्रह्मा) हिरण्यरेतस् सु—पूर्ववत्।
(6) जातवेदाः (= ईश्वर)—जातवेदस् सु—पूर्ववत्।
(7) सर्ववेदाः (= ईश्वर)—सर्ववेदस् सु—पूर्ववत्।
(8) विश्ववेदाः (= ईश्वर)—विश्ववेदस् सु—पूर्ववत्।
(9) वृद्धश्रवाः—वृद्धश्रवस् सु—पूर्ववत्।
(10) विष्टरश्रवाः—विष्टरश्रवस्—सु। पूर्ववत्।

## (672) चन्द्रे मो डित् [4.229]

**पद॰**—चन्द्रे 7.1, मः 5.1, डित् 1.1

**अनु॰**—'मिथुनेऽसिः' (उ॰सू॰ 4.224) से 'असिः' का अनुवर्त्तन है।

**सं॰**—चन्द्र उपपदे माधातोर् असिप्रत्ययः स्यात्, स च डित्सञ्ज्ञः।

**व्याख्या**—'चन्द्र' शब्द के उपपद रहते मा धातु से परे असि प्रत्यय होता है तथा वह डित्सञ्ज्ञक होता है। प्रत्यय को डित् करने का प्रयोजन टिलोप करना है।

**स्वा॰द॰वृ॰**—चन्द्रमानन्दं मिमीतेऽसौ **चन्द्रमाः**, सोमो वा; **चन्द्रमसौ, चन्द्रमसः**।

**उदा॰**—(1) चन्द्रमाः (= चन्द्रमा)—चन्द्रं मिमीतेऽसौ। माङ् माने। चन्द्र मा असि—टि का लोप—चन्द्र म् अस् सु—'अत्वसन्तस्य चाऽधातोः' (पा॰ 6.4.14) से उपधादीर्घ—चन्द्रमास् स्—अपृक्त सकार का लोप—चन्द्रमास्—रुत्व, विसर्ग।

## (673) वयसि धाञः [4.230]

**पद॰**—वयसि 7.1, धाञः 5.1

**अनु॰**—'मिथुनेऽसिः' (उ॰सू॰ 4.224) से 'असिः' का अनुवर्त्तन है।

**सं॰**—वयस्युपपदे धाधातोर् असिप्रत्ययः स्यात्।

**व्याख्या**—'वयस्' शब्द के उपपद रहते धा धातु से परे असि प्रत्यय होता है। असि के इकार का लोप होता है। 'अस्' शेष रहता है।

**स्वा॰द॰वृ॰**—वयो दधातीति **वयोधाः**, तरुणो वा।

**उदा॰**—(1) वयोधाः (= युवा)—वयो दधातीति। वयस् डुधाञ् असि—आदिर्ञिटुडवः, हलन्त्यम्, अनुबन्धलोप—वयस् धास्—ससजुषो रुः, हशि च—वयोधास् सु।

## (674) पयसि च [4.231]

**पद०**—पयसि 7.1, च—अव्य० ।

**अनु०**—'मिथुनेऽसिः' (उ०सू० 4.224) से 'असिः' का तथा 'वयसि धाञः' (उ०सू० 4.230) से 'धाञः' का अनुवर्त्तन है ।

**सं०**—पयस्युपपदे धाधातोर् असिप्रत्ययः स्यात् ।

**व्याख्या**—'पयस्' शब्द के उपपद रहते धा धातु से परे असि प्रत्यय होता है । प्रत्यय का 'अस्' शेष रहता है । 'पयस्' शब्द के दो अर्थ हैं—(i) जल तथा (ii) दूध ।

**स्वा०द०वृ०**—धाञ इत्येव । पयो दधातीति **पयोधाः**, समुद्रो वा मेघविशेषः स्तनो वा ।

**उदा०**—(1) पयोधाः (= सागर, स्तन)—पयो दधातीति । पयस् डुधाञ् असि—सभी कार्य पूर्ववत् । पयो दुग्धं दधाति—स्तनम् । पयो जलं दधातीति = सागरः ।

## (675) पुरसि च [4.232]

**पद०**—पुरसि 7.1, च—अव्य० ।

**अनु०**—'मिथुनेऽसिः' (उ०सू० 4.224) से 'असिः' का तथा 'वयसि धाञः' (उ०सू० 4.230) से 'धाञः' का अनुवर्त्तन है ।

**सं०**—पुरस्युपपदे धाधातोर् असिप्रत्ययः स्यात् ।

**व्याख्या**—'पुरस्' शब्द के उपपद रहते 'धा' धातु से परे असि प्रत्यय होता है । 'असि' का 'अस्' शेष रहता है । 'पुरस्' का अर्थ है—अग्रभाग ।

**स्वा०द०वृ०**—धाञ इत्येव । पुरोऽग्रे यजमानं दधातीति **पुरोधाः**, पुरोहितो वा ।

**उदा०**—(1) पुरोधाः (= पुरोहित)—पुरोऽग्रे दधातीति । पुरस् डुधाञ् असि—शेष पूर्ववत्

## (676) पुरूरवाः [4.233]

**पद०**—पुरूरवाः 1.1

**सं०**—'पुरूरवस्'शब्दोऽसिप्रत्ययान्तो निपात्यते ।

**व्याख्या**—'पुरूरवस्' शब्द असि प्रत्ययान्त निपातित है । पुरूपूर्वक 'रु' धातु से 'असि' प्रत्यय का निपातन है ।

**स्वा०द०वृ०**—पुरू बहु रौत्युपदिशति ब्रवीति वा स **पुरूरवाः**, राजर्षिर्वा ।

**उदा०**—(1) पुरूरवाः (= राजर्षि)—पुरू बहु रौत्युपदिशति । पुरू अस्—आर्धधातुकं शेषः, 'सार्वधातुकार्धधातु०' से गुण—पुरू रो अस्—'एचोऽयवायावः' से अय् आदेश, सु ।

## (677) चक्षेर्बहुलं शिच्च [4.234]

**पद०**—चक्षेः 5.1, बहुलम् 2.1, शित् 1.1, च—अव्य० ।

**अनु०**—'मिथुनेऽसिः' (उ०सू० 4.224) से सम्पूर्ण सूत्र का अविकल अनुवर्त्तन है ।

**सं०**—उपपदे भूते चक्ष्धातोर् असिप्रत्ययः बहुलं स्यात्, स चं शित्सञ्ज्ञः ।

**व्याख्या**—उपपदपूर्वक चक्ष् धातु से असि प्रत्यय बहुलता से होता है और वह शित्सञ्ज्ञक होता है । 'असि' प्रत्यय 'आर्धधातुकं शेषः' से आर्धधातुकसञ्ज्ञक होता है । आर्धधातुकसञ्ज्ञक प्रत्यय के परे रहते 'चक्षिङः ख्याञ्' (पा० 2.4.54) से चक्ष् धातु के स्थान पर 'ख्या' आदेश होता है । 'ख्या' आदेश के बाध के लिए 'असि' प्रत्यय को प्रकृत सूत्र के द्वारा शित् किया गया है । शित् करने से 'असि' प्रत्यय की सार्वधातुक सञ्ज्ञा हो जाती है । (द्रष्टव्य—'तिङ्शित् सार्वधातुकम्' पा० 3.4.113) ।

**स्वा०द०वृ०**—विशेषेण चष्टेऽसौ **विचक्षाः**, उपाध्यायो वा । नॄन् चष्टे पश्यति ख्याति वा स **नृचक्षाः**, ईश्वरो दुष्टो वा । शित्त्वाभावपक्षे—आचष्टेऽसौ **'आख्याः; प्रख्याः'**, प्रजापतिर्वा ।

**उदा०**—(1) विचक्षाः (= उपाध्याय)—विशेषेण चष्टेऽसौ । वि चक्षिङ् व्यक्तायां वाचि असि—वि चक्ष् अस्—विचक्षस् सु—'अत्वसन्तस्य०' से उपधादीर्घ—विचक्षास् स्—अपृक्त सकार का लोप—विचक्षास्—रुत्व, विसर्ग ।

(2) नृचक्षाः (= ईश्वर, खल)—नॄन् चष्टे । नृ चक्ष् असि—पूर्ववत् ।

(3) आख्याः (= प्रजापति)—आचष्टेऽसौ । आ चक्षिङ् असि—अनुबन्ध-लोप—आ चक्ष् अस्—असि प्रत्यय बहुलता से शित् होता है, शित्त्व अभाव पक्ष में असि प्रत्यय की आर्धधातुक सञ्ज्ञा, चक्ष् के स्थान पर ख्या आदेश—आ ख्या अस् सु—पूर्ववत् ।

(4) प्रख्याः (= प्रजापति)—प्रकृष्टरूपेण चष्टेऽसौ । प्र चक्ष् असि—पूर्ववत् ।

## (678) उषः किच्च [4.235]

**पद०**—उषः 5.1, कित् 1.1, च—अव्य० ।

**अनु०**—'मिथुनेऽसिः' (उ०सू० 4.224) से 'असिः' का अनुवर्त्तन है।
**सं०**—उष्धातोर् असिप्रत्ययः स्यात्, स च कित्सञ्ज्ञः।

**व्याख्या**—उष् धातु से परे असि प्रत्यय होता है और वह कित्सञ्ज्ञक होता है। प्रत्यय को कित् करने का प्रयोजन लघूपध गुण का निषेध करना है। दशपादीवृत्ति (9.94) में 'वस निवासे' धातु से असि प्रत्यय किया है। यथा—वसति तस्याम्। वस् असि—सम्प्रसारण—उस् अस्—मूर्धन्य आदेश—उषस् सु।

**स्वा०द०वृ०**—असिः। ओषति दहतीति **उषः**, कर्णछिद्रं पर्वतभेदः [ वा ]; स्त्रियां सूर्योदयात् प्राक् प्रभातप्रकाशः **उषाः** वा। उषःकाले बुध्यते इति **'उषर्बुधः'**, अग्निर्बालः संयमी वा। कप्रत्ययान्ताट्टापि कृते **उषा** रात्रिरित्यपि भवति।

**उदा०**—(1) उषः (= प्रातःवेला, कर्णविल)—ओषति दहति। उष दाहे। उष् असि—अनुबन्धलोप—उष् अस्—'पुगन्तलघूपधस्य च' (पा० 7.3.86) से लघूपध गुण प्राप्त, निषेध, सु।

(2) उषा (= रात्रि)—'क' प्रत्यय, 'लशक्वतद्धिते' से 'क्' इत्सञ्ज्ञक—उष् अ—उष—स्त्रियाम्, अजाद्यतष्टाप्—उषा सु—अपृक्त सकार का लोप।

## (679) दमेरुनसिः [4.236]

**पद०**—दमेः 5.1, उनसिः 1.1
**सं०**—दम्धातोर् उनसिप्रत्ययः स्यात्।

**व्याख्या**—दम् धातु से परे 'उनसि' प्रत्यय होता है। सकारस्थ इकार उच्चारणार्थ है। दशपादीवृत्ति (9.95) में 'ऊनसि' प्रत्यय का विधान है।

**स्वा०द०वृ०**—दाम्यत्युपशमयतीति **दमुनाः**, अग्निर्वा।

**उदा०**—(1) दमुनाः (= अग्नि)—दाम्यत्युपशमयति। दमु उपशमे। दम् उनसि—दम् उनस् सु—'चन्द्रमाः' की तरह।

(2) दमूनाः—दम् ऊनस् सु—पूर्ववत्।

## (680) अङ्गेरसि [4.237]

**पद०**—अङ्गेः 5.1, असि 1.1
**सं०**—अङ्ग्धातोर् असिप्रत्ययः स्यात्। प्रत्ययस्य रुडागमो बहुलवचनाद् भवति।

**व्याख्या**—'अङ्ग्' धातु से परे असि प्रत्यय होता है तथा बहुलवचनात् प्रत्यय

को रुट् आगम होता है। असि का 'अस्' शेष रहता है। रुट् का टकार इत्सञ्ज्ञक है। उकार उच्चारणार्थ है। रेफ शेष रहता है। रुट् टित् है, अतः 'आद्यन्तौ टकितौ' से प्रत्यय का आद्यवयव बनता है।

**स्वा०द०वृ०**—अङ्गति प्राप्नोति जानाति वा स **अङ्गिराः**, ईश्वरोऽग्निः ऋषिभेदो वा; तस्यापत्यम् **'आङ्गिरसः'**। असिप्रत्ययस्य इरुडागमः।

**उदा०**—(1) अङ्गिराः (= एक ऋषि, अग्नि, ईश्वर)—अङ्गति प्राप्नोति। अगि—अ नुम् ग्—'इदितो नुम् धातोः' से नुम् आगम—'नश्चाऽपदान्तस्य झलि' से अनुस्वार। अंग्—'अनुस्वारस्य ययि०' से परसवर्ण। अङ्ग् रुट् असि—अनुबन्धलोप—अङ्ग् इ र् अस् सु—विभक्तिकार्य।

(2) आङ्गिरसः (= अङ्गिरा ऋषि का पुत्र)—'तस्याऽपत्यम्' के अधिकार में अण् प्रत्यय—अङ्गिरस् अ—आदिवृद्धि, सु।

## (681) सर्त्तेरप्पूर्वपदादसिः [4.238]

**पद०**—सर्त्तेः 5.1, अप् पूर्वपदात् 5.1, असिः 1.1

**सं०**—अप्पूर्वपदात् सृधातोर् असिप्रत्ययः स्यात्।

**व्याख्या**—'अप्' शब्द के पूर्वपद रहते सृ धातु से परे 'असि' प्रत्यय होता है। असि का 'अस्' शेष रहता है।

**स्वा०द०वृ०**—अपसरति विरुद्धं गच्छतीति **अप्सराः** [विद्युत्]। उपसर्गान्त्यलोपः। अथवाऽप्सु जलेषु प्राणेषु वा सरन्तीति **अप्सरसः**, किरणा वा; अथवा न प्सान्ति भक्षयन्ति रक्षां कुर्वन्तीति **अप्सरसः**, प्रत्ययस्य रुट् [धातोर्ह्रस्वत्वं च]। नित्यबहुवचनान्तः स्त्रीलिङ्गश्च।

**उदा०**—(1) अप्सरसः (= किरण), अप्सराः (= विद्युत्)—अपसरति विरुद्धं गच्छति अप्सराः (= विद्युत्)। अप सृ गतौ असि—उपसर्ग के अन्त्य अल् का लोप बहुलता से। अप् सर् अस्—आर्धधातुक गुण, रपरत्व, सु—विभक्तिकार्य। अथवा अप्सु जलेषु (प्राणेषु वा) सरन्तीति—अप्सरसः (किरणाः)। अथवा न प्सान्ति भक्षयन्ति। नञ् प्सा रुट् अस्—धातु को ह्रस्व आदेश। अ प्सर् अस् सु।

## (682) विदिभुजिभ्यां विश्वेऽसिः [4.239]

**पद०**—विदिभुजिभ्याम् 5.2, विश्वे 7.1, असिः 1.1

**सं०**—विश्वशब्द उपपदे विद् भुज्—इत्येताभ्यां धातुभ्याम् असिप्रत्ययः स्यात्।

**व्याख्या**—'विश्व' शब्द के उपपद रहते विद् और भुज्—इन धातुओं से परे असि प्रत्यय होता है। 'अस्' शेष रहता है।

**स्वा०द०वृ०**—विश्वं सर्वं वेत्ति जानातीति **विश्ववेदाः**, जगदीश्वरो वा; विश्वे विद्यते विश्वं वा विन्दति स **विश्ववेदाः**, अग्निर्वा। विश्वं भुनक्ति प्रलयसमये कारणरूपेण स्वात्मनि स्थापयति वा विश्वं पालयतीति **विश्वभोजाः**, ईश्वरो राजा वा।

**उदा०**—(1) विश्ववेदाः (= अग्नि, ईश्वर)—विश्वं सर्वं वेत्ति जानाति। विश्व विद् असि—आर्धधातुक गुण, सु।

(2) विश्वभोजाः (= राजा, स्वामी)—विश्वं भुनक्ति। विश्व भुज् असि—लघूपध गुण। विश्वभोजस् सु—पूर्ववत् विभक्तिकार्य।

## (683) वशेः कनसिः [4.240]

**पद०**—वशेः 5.1, कनसिः 1.1

**सं०**—वश्धातोः कनसिप्रत्ययः स्यात्।

**व्याख्या**—वश् धातु से परे कनसि प्रत्यय होता है। 'लशक्वतद्धिते' (पा० 1.3.8) से 'क्' इत्सञ्ज्ञक है। सकारस्थ इकार उच्चारणार्थ है। 'कनसि' का 'अनस्' शेष रहता है। 'क्' अनुबन्ध सम्प्रसारण कार्य के लिए है।

**स्वा०द०वृ०**—वष्टि कामयते स **उशनाः**, शुक्रः वारो वा। सम्प्रसारणादि-कार्यम्।

**उदा०**—(1) उशनाः (= शुक्रवार, भृगु का पुत्र)—वष्टि कामयते। वश कान्तौ। वश् कनसि—अनुबन्धलोप—वश् अनस्—'ग्रहिज्यावयिव्यधि०' (पा० 6.1.16) से वकार के स्थान पर सम्प्रसारण प्राप्त, 'इग्यणः सम्प्रसारणम्' (पा० 1.1.45) तथा 'स्थानेऽन्तरतमः' (पा० 1.1.50) से वकार के स्थान पर उकार, उ अश् अनस्—'सम्प्रसारणाच्च' (पा० 6.1.104) से पूर्वरूप—उशनस् सु—'अत्व-सन्तस्य०' से उपधादीर्घ—उशनास् स्—अपृक्त सकार का लोप।

**॥ इति 'पीयूष'संस्कृत-हिन्दी-व्याख्याद्वयोपेतोणादिकोषे चतुर्थः पादः ॥**



## पञ्चमः पादः

### (684) अदि भुवो डुतच् [5.1]

**पद०**—अदि 7.1, भुवः 5.1, डुतच् 1.1

**सं०**—अदि उपपदे भूधातोर् डुतच्प्रत्ययः स्यात्।

**व्याख्या**—'अद्' शब्द के उपपद रहते भू धातु से परे 'डुतच्' प्रत्यय होता है। डुतच् के डकार की 'चुटू' (पा० 1.3.7) से इत्सञ्ज्ञा है। 'च्' की 'हलन्त्यम्' (पा० 1.3.3) से इत्सञ्ज्ञा है। 'उत' शेष रहता है। प्रत्यय को डित् करने का प्रयोजन टिलोप करना है! 'च्' अनुबन्ध अन्तोदात्त स्वर के लिए है। द्रष्टव्य—'चितः' (पा० 6.1.162)। 'अद्' एक अव्यय है। अद्=कदाचित्।

**स्वा०द०वृ०**—अदित्यव्ययं कदाचिदर्थे। अद् भवतीति **अद्भुतम्** आश्चर्यम्। अद्भुतमधीते, अद्भुताध्यापकः।

**उदा०**—(1) अद्भुतम् (=विचित्र)—अद् भवति। अद् भू डुतच्—अनुबन्धलोप—अद् भू उत—टिलोप—अद् भ् उत सु—अतोऽम्, अमि पूर्वः।

### (685) गुधेरूमः [5.2]

**पद०**—गुधेः 5.1, ऊमः 1.1

**सं०**—गुध्धातोर् ऊमप्रत्ययः स्यात्।

**व्याख्या**—गुध् धातु से परे 'ऊम' प्रत्यय होता है। 'आर्धधातुकं शेषः' (पा० 3.4.114) से प्रत्यय आर्धधातुकसञ्ज्ञक है।

**स्वा०द०वृ०**—गुध्यति वेष्टयतीति **गोधूमः,** अन्नविशेषो वा। गोधूमस्य विकारो **'गोधूममयः'**।

**उदा०**—(1) गोधूमः (= अनाजविशेष)—गुध्यति वेष्टयति। गुध परिवेष्टने। गुध् ऊम—'पुगन्तलघूपधस्य च' (पा० 7.3.86) से लघूपध गुण—गोधूम सु।
(2) गोधूममयः—गोधूमस्य विकारः—गोधूम मयट्—'ट्' का लोप, सु।

### (686) मसेरूरन् [5.3]

**पद०**—मसेः 5.1, ऊरन् 1.1

**सं०**—मस्धातोर् ऊरन्प्रत्ययः स्यात्।

**व्याख्या**—मस् धातु से परे 'ऊरन्' प्रत्यय होता है। 'न्' इत्सञ्ज्ञक है। 'न्' अनुबन्ध आद्युदात्त स्वर के लिए है। द्रष्टव्य—ञ्नित्यादिर्नित्यम्।

**स्वा०द०वृ०**—मस्यति परिणमतेऽसौ **मसूरः**, व्रीहिभेदो [ वा; स्त्रियां टाप्—**मसूरा** ] वेश्या वा।

**उदा०**—(1) मसूरः (= अन्नविशेष)—मस्यति परिणमते। मसी परिणामे। मस् ऊरन्—मसूर सु।

(2) मसूरा (= वेश्या)—मसूर टाप्—अनुबन्धलोप, सवर्णदीर्घ, सु, लोप।

## (687) स्थः किच्च [5.4]

**पद०**—स्थः 5.1, कित् 1.1, च—अव्य०।

**अनु०**— 'मसेरूरन्' (उ०सू० 5.3) से 'ऊरन्' का अनुवर्त्तन है।

**सं०**—स्थाधातोर् ऊरन्प्रत्ययः स्यात्, स च कित्सञ्ज्ञः।

**व्याख्या**—स्था धातु से परे ऊरन् प्रत्यय होता है और वह कित्सञ्ज्ञक होता है। 'ऊरन्' का 'ऊर' शेष रहता है।

**स्वा०द०वृ०**—तिष्ठतीति **स्थूरः**, मनुष्यो वा; तस्यापत्यं **'स्थौर्य्यः'**।

**उदा०**—(1) स्थूरः (= मनुष्य, बैल)—तिष्ठतीति। ष्ठा गतिनिवृत्तौ। 'धात्वादेः षः सः' से षकार को सकार—सठा—'निमित्ताऽपाये नैमित्तिकस्याऽप्यपायः' से ठकार को थकार—स्था ऊरन्—स्था ऊर—स्थ् ऊर—बाहुलकात् धातु के आकार का लोप, सु।

## (688) पातेरतिः [5.5]

**पद०**—वसतेः 5.1, अतिः 1.1

**सं०**—पाधातोर् अतिप्रत्ययः स्यात्।

**व्याख्या**—पा धातु से परे अति प्रत्यय होता है।

**स्वा०द०वृ०**—पाति रक्षतीति **पातिः** स्वामी; **'सम्पातिः'** पक्षिराजो वा।

**उदा०**—(1) पातिः (= स्वामी)—पाति रक्षति। पा रक्षणे। पा अति सु। इसी प्रकार—

(2) सम्पातिः (= एक पक्षी)।

## (689) वातेर्नित् [5.6]

**पद०**—वातेः 5.1, नित् 1.1

**अनु०**—'पातेरतिः' (उ०सू० 5.5) से 'अतिः' का अनुवर्त्तन है।
**सं०**—वाधातोर् अतिप्रत्ययः स्यात्, स च नित्सञ्ज्ञः।

**व्याख्या**—'वा' धातु से परे 'अति' प्रत्यय होता है और वह नित्सञ्ज्ञक होता है। प्रत्यय को नित् करने का प्रयोजन आद्युदात्त स्वर करना है।

**स्वा०द०वृ०**—वाति गच्छतीति **वातिः**, सूर्यश्चन्द्रो वा।

**उदा०**—(1) वातिः (= सूर्य, चन्द्र, वायु)—वाति गच्छति। वा गतिगन्धनयोः। वा अति—सु।

## (690) अर्त्तेश्च [5.7]

**पद०**—अर्त्तेः 5.1, च—अव्य०।
**अनु०**— 'पातेरतिः' (उ०सू० 5.5) से 'अतिः' का अनुवर्त्तन है।
**सं०**—ऋधातोर् अतिप्रत्ययः स्यात्।

**व्याख्या**—ऋ धातु से परे 'अति' प्रत्यय होता है।

**स्वा०द०वृ०**—अर्यते गम्यते सा **अरतिः**, उद्वेगो वा।

**उदा०**—(1) अरतिः (= पीड़ा)—अर्यते गम्यते सा। ऋ गतौ।

## (691) तृहेः क्नो हलोपश्च [5.8]

**पद०**—तृहेः 5.1, क्नः 1.1, हलोपः 1.1, च—अव्य०।
**सं०**—तृह्धातोः क्नप्रत्ययः स्याद्, धातोश्च हकारस्य लोपः स्यात्।

**व्याख्या**—'तृहेः' पद की आवृत्ति की जाती है। प्रथम 'तृहेः' पद को पञ्चम्यन्त मानकर धातु से 'क्न' प्रत्यय किया जाता है। द्वितीय 'तृहेः' पद को विभक्तिविपरिणाम से षष्ठ्यन्त मानकर धातु के अन्त्य अल् का लोप किया जाता है। अर्थ—तृह् धातु से परे 'क्न' प्रत्यय होता है तथा धातु का जो हकार, उसका लोप होता है। 'क्न' के ककार की 'लशक्वतद्धिते' (पा० 1.3.8) से इत्सञ्ज्ञा होती है। प्रत्यय को कित् करने का प्रयोजन गुणनिषेध करना है।

**स्वा०द०वृ०**—तृह्यते हन्यते तत् **तृणम्** प्रसिद्धमेव।

**उदा०**—(1) तृणम् (= तृण)—तृह्यते हन्यते तत्। तृह हिंसायाम्। तृह् क्न—अनुबन्धलोप, हकारलोप। तृ न—'ऋवर्णान्नस्य णत्वं वाच्यम्' (वा०) से णत्व, सु, अतोऽम्।

## (692) वृञ्लुठितनिताडिभ्य उलच् तण्डश्च [5.9]

**पद०**—वृञ्लुठितनिताडिभ्यः 5.3, उलच् 1.1, तण्डः 1.1, च—अव्य०।
**सं०**—वृञ् लुठ् तन् ताडि—इत्येतेभ्यो धातुभ्य उलच्प्रत्ययः स्याद् धातोश्च स्थाने 'तण्ड' इत्यादेशः स्यात्।

**व्याख्या**—वृञ्, लुठ्, तन् तथा ताडि—इन धातुओं से परे उलच् प्रत्यय होता है तथा धातु के स्थान पर 'तण्ड' आदेश होता है। उलच् का 'च्' इत्सञ्ज्ञक है। 'च्' अनुबन्ध का प्रयोजन अन्तोदात्त स्वर करना है। 'तण्ड' में डकारस्थ अकार उच्चारणार्थ है। 'तण्ड्' अनेकाल् है। 'अनेकाल्शित् सर्वस्य' से सर्वादेश होता है। अतः वृ आदि प्रकृतियों के स्थान पर 'तण्ड्' आदेश होता है।

**स्वा०द०वृ०**—व्रियन्ते लुठ्यन्ते तन्यन्ते ताड्यन्ते वा ते **तण्डुलाः**, प्रसिद्धा वा। वृञादीनां स्थाने तण्डादेशः।

**उदा०**—(1) तण्डुलः (= चावल)—व्रियन्ते। वृञ् वरणे। वृ उलच्—तण्ड् उल—सु।
(2) लुठ्यन्ते। लुठ उपघाते। लुठ् उलच्—तण्ड् उल—सु।
(3) तन्यन्ते। तन विस्तारे। तन् उलच्—तण्ड् उल—सु।
(4) ताड्यन्ते। 'तड आघाते' धातु से स्वार्थ में णिच् होकर 'ताडि' रूप बनता है। सूत्र में इसी का ग्रहण है। ताड् इ उलच्—तण्ड् उल—सु।

## (693) दंसेष्टटनौ न आ च [5.10]

**पद०**—दंसेः 5.1, टटनौ 1.2, नः 6.1, आ 1.1, च—अव्य०।
**सं०**—दंस्धातोष् टटनौ प्रत्ययौ भवतो धातोश्च यो नकारस्तस्य स्थाने 'आ' इत्यादेशो भवति।

**व्याख्या**—'दंसेः' पद की आवृत्ति की जाती है। प्रथम 'दंसेः' पद को पञ्चम्यन्त मानकर धातु से परे प्रत्यय किया जाता है। द्वितीय 'दंसेः' पद को विभक्तिविपरिणाम से षष्ठ्यन्त मानकर इसका 'नः' इस षष्ठ्यन्त पद के साथ अन्वय किया जाता है। अर्थ—दंस् धातु से परे 'ट' तथा 'टन्' प्रत्यय होते हैं तथा धातु का जो नकार, उसके स्थान पर 'आ' आदेश होता है। दन् स्—इस दशा में नकार को अनुस्वार होकर 'दंस्' बनता है। प्रकृत में नकार के द्वारा इस अनुस्वार का ही ग्रहण है। 'ट' और 'टन्' के 'ट्' की 'चुटू' (पा० 1.3.7) से इत्सञ्ज्ञा होती है। टन् के 'न्' की 'हलन्त्यम्' (पा० 1.3.3) से इत्सञ्ज्ञा होती है। 'ट्' अनुबन्ध स्त्रीत्व की विवक्षा में 'टिड्ढाऽणञ्०' (पा० 4.1.15) से 'ङीप्' प्रत्यय के लिए है। 'न्' अनुबन्ध आद्युदात्त स्वर के लिए है। द्रष्टव्य—'ञ्नित्यादिर्नित्यम्' (पा० 6.1.196)। 'ट' और 'टन्' में स्वर का अन्तर है।

**स्वा०द०वृ०**—दंसयति दशति पश्यति वा स **दासः**, सेवकः शूद्रो वा। टित्त्वान् [ द्रष्टव्य—अ० 4.1.45 ] ङीप् **'दासी'**। नकारस्याकारः। नित्करणं पक्ष आद्युदात्तार्थम्।

**उदा०**—(1) दासः (= सेवक)—दंसयति। दसि भाषार्थे। 'इदितो नुम् धातोः' (पा० 7.1.58) से नुम् आगम—द नुम् स्—अनुबन्धलोप, ट प्रत्यय, अनुबन्धलोप। दन् स् अ—नकार के स्थान पर आकार आदेश—द आ स् अ—सवर्णदीर्घ, सु।

(2) दासी—दास ङीप्—'स्त्रियाम्' (पा० 4.1.3), 'टिड्ढाऽण०', लशक्वतद्धिते, हलन्त्यम्—दास ई—'यचि भम्' (पा० 1.4.18) से 'भ' सञ्ज्ञा, 'यस्येति च' (पा० 6.4.148) से अकारलोप—दास् ई सु—'हल्ङ्याब्भ्यो०' से अपृक्त सकार का लोप।

दासः—ट प्रत्यय पक्ष में। दासः—टन् प्रत्यय पक्ष में।

## (694) दंशेश्च [5.11]

**पद०**—दंशेः 5.1, च—अव्य०।

**अनु०**— 'दंसेष्टटनौ न आ च' (उ०सू० 5.10) से 'टटनौ', 'नः' और 'आ'—इनका अनुवर्त्तन है।

**सं०**—दंश्धातोष् टटनौ प्रत्ययौ भवतो धातोश्च यो नकारस्तस्य स्थाने 'आ' इत्यागमो भवति।

**व्याख्या**—'दंशेः' पद की पूर्ववत् आवृत्ति करके सूत्रार्थ किया जाता है। दंश् धातु से परे 'ट' और 'टन्' प्रत्यय होते हैं और धातु का जो नकार, उसके स्थान पर 'आ' आदेश होता है। 'ट' का टकार और 'टन्' के टकार-नकार इत्सञ्ज्ञक हैं।

**स्वा०द०वृ०**—टटनौ नकारस्य चात्त्वम्। दशति मत्स्यादिकमिति **दाशः** धीवरः। स्त्रियां **'दाशी'** धीवरी।

**उदा०**—(1) दाशः (= धीवर), दाशः—दशति जलचरान्। दंश दशने। दंश् ट (अथवा टन्)। द आश् अ—अनुबन्धलोप, नकार के स्थान पर आकार। दाश् अ-सवर्ण दीर्घ। ट प्रत्ययान्त अन्तोदात्त। टन् प्रत्ययान्त आद्युदात्त।

(2) दाशी (= धीवरी)—दाश ङीप्—'टिड्ढाऽणञ्०' से ङीप्। पूर्ववत्।

## (695) उदि चेर्डैसिः[5.12]

**पद०**—उदि 7.1, चेः 5.1, डैसिः 1.1

**सं०**—उद्युपपदे चिधातोर् डैसिप्रत्ययो भवति।

**व्याख्या**—'उद्' शब्द के उपपद रहते 'चि' धातु से परे 'डैसि' प्रत्यय होता है। 'डैसि' में सकार से उत्तरवर्ती इकार उच्चारणार्थ है। डकार की 'चुटू' (पा० 1.3.7) से इत्सञ्ज्ञा होती है। प्रत्यय को डित् करने का प्रयोजन टिलोप करना है। प्रत्यय का 'ऐस्' शेष रहता है।

**स्वा०द०वृ०**—उच्चीयते वर्ध्यतेऽसौ **उच्चैः**, महान् वा। **स्वरादित्वाद्** (अ० 1.1.36) अव्ययम्।

**उदा०**—(1) उच्चैः (= ऊँचा, उपरि)—उच्चीयते वर्ध्यतेऽसौ। उद् चिञ् चयने। उद् चि डैसि—अनुबन्धलोप—उद् चि ऐस्—'स्तोः श्चुना श्चुः' (पा० 8.4.39) से दकार के स्थान पर श्चुत्व प्राप्त हुआ, 'स्थानेऽन्तरतमः' से जकार हुआ—उज् चि ऐस्—'खरि च' (पा० 8.4.54) से जकार चर्त्व आदेश—उच् चि ऐस्—टिलोप—उच् च् ऐस् सु—अव्ययसञ्ज्ञा, 'अव्ययादाप्सुपः' (पा० 2.4.82) से सु का लुक्।

## (696) नौ दीर्घश्च[5.13]

**पद०**—नौ 7.1, दीर्घः 1.1, च—अव्य०।

**अनु०**— 'उदि चेर्डैसिः' (उ०सू० 5.12) से 'चेर्डैसिः' का अनुवर्त्तन है।

**सं०**—नावुपपदे चिधातोर् डैसिप्रत्ययः स्याद्, उपपदस्य च दीर्घ आदेशो भवति।

**व्याख्या**—'दीर्घः' पद का विभक्तिविपरिणाम से प्राप्त षष्ठ्यन्त 'नेः' पद के साथ अन्वय होता है। अर्थ—'नि' शब्द के उपपद रहते 'चि' धातु से परे 'डैसि' प्रत्यय होता है और उपपद 'नि' को दीर्घ आदेश होता है। 'डैसि' का 'ऐस्' शेष रहता है। ह्रस्व-दीर्घ आदि सञ्ज्ञाएँ अच् वर्ण की ही होती हैं। अतः प्रकृत सूत्र के द्वारा विहित दीर्घ आदेश 'नि' के अच् (अर्थात् इकार) के स्थान पर होता है।

**स्वा०द०वृ०**—चेरित्येव। निचीयत इति **नीचैः**, अधोऽधमो वा। अस्यापि **स्वरादित्वात्** (अ० 1.1.36) एवाव्ययत्वम्।

**उदा०**—(1) नीचैः (= नीचे, वामन)—निचीयत इति। नि चिञ् चयने। नि चि डैसि—अनुबन्धलोप, टि का लोप—नि च् ऐस्—उपपद को दीर्घ आदेश—नीचैस् सु—अव्ययसञ्ज्ञा, 'अव्ययादाप्सुपः' से सुलुक्, रुत्व, विसर्ग।

## (697) सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः[5.14]

**पद०**—सौ 7.1, रमेः 5.1, क्तः 1.1, दमे 7.1, पूर्वपदस्य 6.1, च—अव्य०, दीर्घः 1.1

**सं०**—दमे गम्यमाने सावुपपदे रम्‌धातोः क्तप्रत्ययः स्यात्, पूर्वपदस्य च दीर्घ आदेशः स्यात्।

**व्याख्या**—यदि 'दमन' अर्थ वाच्य हो और 'सु' शब्द उपपद हो तो रम् धातु से परे 'क्त' प्रत्यय होता है तथा पूर्वपद को दीर्घ आदेश होता है। 'क्त' के 'क्' की 'लशक्वतद्धिते' से इत्सञ्ज्ञा है। 'त' शेष रहता है। दीर्घ आदेश पूर्वपद (सु) में स्थित अच् वर्ण (उकार) के स्थान पर होता है।

**स्वा०द०वृ०**—सुष्ठु रमत इति **सूरतः**, उपशान्तः कृपालुर्वा। दमार्थादन्यत्र **'सुरतः'** क्रीडायुक्तः।

**उदा०**—(1) सूरतः (= कृपालु, शान्त, कोमल)—सुष्ठु रमत इति। सु रमु क्रीडायाम् क्त। अनुबन्धलोप—सु रम् त—पूर्वपद को दीर्घ आदेश—सू रम् त—'अनुदात्तोपदेशवनतितनोत्या०' (पा० 6.4.37) से अनुनासिकलोप—सूरत सु।

(2) सुरतः (= क्रीडा में लीन)—'दमन' अर्थ वाच्य न हो तो पूर्वपद को दीर्घ आदेश नहीं होता है—सु रम् क्त—अनुनासिकलोप, पूर्ववत्।

## (698) पूञो यण् णुग्ह्रस्वश्च [5.15]

**पद०**—पूञः 5.1, यत् 1.1, णुक् 1.1, ह्रस्वः 1.1, च—अव्य०।

**सं०**—पूधातोर् यत्प्रत्ययः स्याद्, धातोश्च ह्रस्वाऽऽदेशो 'णुक्' इत्यागमो भवतः।

**व्याख्या**—'पू' धातु से परे 'यत्' प्रत्यय होता है तथा धातु को ह्रस्व आदेश एवं 'णुक्' आगम होते हैं। 'यत्' का 'त्' इत्सञ्ज्ञक है। 'त्' अनुबन्ध स्वरित स्वर के लिए है। द्रष्टव्य—तित् स्वरितम्। णुक् के ककार की इत्सञ्ज्ञा है। उकार उच्चारणार्थ है। 'ण्' शेष रहता है। णुक् कित् है। 'आद्यन्तौ टकितौ' (पा० 1.1.45) से धातु का अन्ताऽवयव बनता है। ह्रस्वादि सञ्ज्ञाएँ अच् वर्ण की हुआ करती हैं। अतः (पू) धातु में स्थित अच् वर्ण (ऊकार) के स्थान पर ह्रस्व आदेश होता है।

**स्वा०द०वृ०**—पवते पवित्रो भवति येन तत् **पुण्यम्**, सुकृतो धर्मो वा।

**उदा०**—(1) पुण्यम् (= सुकृत)—पवते पवित्रो भवति येन तत्। पूञ् पवने 'यत्'। पू—पु ह्रस्व आदेश—पु णुक् यत्—अनुबन्धलोप—पुण् य सु—अतोऽम्, अमि पूर्वः। पू यत्—प्रकृत सूत्र से ह्रस्व आदेश हुआ—पु य—पुनः वृद्धि आदेश प्राप्त हुआ, परन्तु ह्रस्वादेश सामर्थ्य से वृद्धि आदेश का निषेध होता है।

## (699) स्रंसेः शिः कुट् किच्च [5.16]

**पद०**—स्रंसेः 5.1, शिः 1.1, कुट् 1.1, कित् 1.1, च—अव्य०।

**अनु०**— 'पूञो यण् णुगह्रस्वश्च' (उ०सू० 5.15) से 'यण्' का अनुवर्त्तन है।

**सं०**—स्रंस्धातोर् यण्प्रत्ययः स्याद्, धातोः स्थाने 'शि' इत्यादेशो भवति, 'कुट्' इत्यागमो भवति, स च कित्सञ्ज्ञः।

**व्याख्या**—स्रंस् धातु से परे 'यत्' प्रत्यय होता है, धातु को 'शि' आदेश होता है, प्रत्यय को 'कुट्' आगम होता है और वह कित्सञ्ज्ञक होता है। 'यत्' का 'य' शेष रहता है। 'शि' अनेकाल् है। 'अनेकाल् शित् सर्वस्य' से 'शि' आदेश सम्पूर्ण स्थानी (अर्थात् स्रंस् धातु) के स्थान पर होता है। कुट् के टकार की इत्सञ्ज्ञा है। उकार उच्चारणार्थ है। 'क्' शेष रहता है। कुट् टित् है। 'आद्यन्तौ टकितौ' से प्रत्यय का आद्यवयव बनता है।

**स्वा०द०वृ०**—स्रंसते गच्छतीति **शिक्यम्**, काचः छींका इति प्रसिद्धः। तत्र धृतं वस्तु **'शैक्यम्'**।

**उदा०**—(1) शिक्यम् (= काच)—स्रंसते गच्छति। स्रंसु अवस्रंसने। स्रंस् शि—धातु को 'शि' आदेश, यत्, कुट् आगम, अनुबन्धलोप—शिक् य सु—अतोऽम्, अमि पूर्वः।

## (700) अर्त्तेः क्युरुच्च [5.17]

**पद०**—अर्त्तेः 5.1, क्युः 1.1, उत् 1.1, च—अव्य०।

**सं०**—ऋधातोः क्युप्रत्ययः स्याद्, धातोश्च—उकारादेशो भवति।

**व्याख्या**—'अर्त्तेः' पद की आवृत्ति की जाती है। 'अर्त्तेः' प्रथम पद को पञ्चम्यन्त मानकर धातु से परे प्रत्यय किया जाता है। द्वितीय 'अर्त्तेः' पद को विभक्तिविपरिणाम से षष्ठ्यन्त मानकर धातु को आदेश किया जाता है। अर्थ—ऋ धातु से परे 'क्यु' प्रत्यय होता है तथा धातु को 'उत्' आदेश होता है। 'उत्' में तकार उच्चारणार्थ है। उत्=ह्रस्व उकार। 'अलोऽन्त्यस्य' से 'उत्' आदेश धातु के अन्त्य अल् के स्थान पर प्राप्त है। व्यपदेशिवद्भाव से उकार आदेश ऋकार को होता है। 'उरण् रपरः' (पा० 1.1.51) से उकार आदेश रपर (उर्) होता है। क्यु के 'क्' की 'लशक्वतद्धिते' (पा० 1.3.8) से इत्सञ्ज्ञा है। 'यु' शेष रहता है। 'युवोरनाकौ' (पा० 7.1.1) से 'यु' के स्थान पर 'अन' आदेश होता है। दशपादीवृत्ति में 'क्युन्' प्रत्यय का विधान है।

**स्वा०द०वृ०**—ऋच्छति गच्छतीति **उरणः**, मेषो वा।

**उदा॰**—(1) उरणः (= मेष, एक राक्षस)—ऋच्छति गच्छति। ऋ गतौ। ऋ क्यु—अनुबन्धलोप—ऋ यु—उकार आदेश—उर् यु—प्रत्यय को 'अन' आदेश—उरन—'अट्कुप्वाङ्नुम्व्यवाये॰' (पा॰ 8.4.2) से णत्व, सु।

## (701) हिंसेरीरनीरचौ [5.18]

**पद॰**—हिंसेः 5.1, ईरनीरचौ 1.2

**सं॰**—हिंस्धातोर् ईरन्ईरचौ प्रत्ययौ भवतः।

**व्याख्या**—हिंस् धातु से परे ईरन् और ईरच् प्रत्यय होते हैं। 'ईरन्' ने 'न्' की तथा 'ईरच्' के 'च्' की इत्सञ्ज्ञा है। दोनों का 'ईर' शेष रहता है। 'न्' अनुबन्ध 'ञ्नित्यादिर्नित्यम्' (पा॰ 6.1.196) से आद्युदात्त स्वर के लिए है। 'च्' अनुबन्ध 'चितः' (पा॰ 6.1.162) से अन्तोदात्त स्वर के लिए है। इस प्रकार ईरन् और ईरच् में स्वर का अन्तर है।

**स्वा॰द॰वृ॰**—हिनस्तीति **हिंसीरः**, व्याघ्रो दुष्टो वा। [ईरन्; ईरच्] प्रत्ययद्वयं स्वरभेदार्थम्।

**उदा॰**—(1) हिंसीरः (= बाघ, दुष्ट, पक्षी)—हिनस्तीति। हिसि हिंसायाम्। 'इदितो नुम् धातोः' से नुम् आगम—हि नुम् स—अनुबन्धलोप, 'नश्चाऽपदान्तस्य झलि' (पा॰ 8.3.24) से अनुस्वार—हिंस् ईरन् (या ईरच्)—हिं सीर सु। 'ईरन् पक्ष में आद्युदात्त (यथा—हिं सीरः) तथा ईरच् पक्ष में अन्तोदात्त (यथा—हिंसितः) होता है।

## (702) उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च [5.19]

**पद॰**—उदि 7.1, दृणातेः 5.1, अच्-अलौ 1.2, पूर्वपदान्त्यलोपः 1.1, च—अव्य॰।

**सं॰**—उद्युपपदे दृधातोर् अच्-अलौ प्रत्ययौ भवतः, पूर्वपदस्य अन्त्यवर्णस्य लोपो भवति।

**व्याख्या**—उद् शब्द के पूर्वपद में रहते दृ धातु से परे अच् और अल् प्रत्यय होते हैं तथा पूर्वपद के अन्त्य वर्ण का लोप होता है। 'अल्' के 'ल्' की इत्सञ्ज्ञा है। 'अ' शेष रहता है। 'अच्' के 'च्' की इत्सञ्ज्ञा है। 'अच्' का 'अ' शेष रहता है। 'ल्' अनुबन्ध 'लिति' (पा॰ 6.1.193) से, 'च्' अनुबन्ध 'चितः' (पा॰ 6.1.161) से अन्तोदात्त स्वर के लिए है। अल् और अच् में स्वर का अन्तर है। 'आर्धधातुकं शेषः' (पा॰ 3.4.114) से अल् और अच् की आर्धधातुक सञ्ज्ञा है।

**स्वा॰द॰वृ॰**—उद् दृणाति येनान्नमिति **उदरम्**, कुक्षिस्थानम्। प्रत्यभेदोऽत्रापि स्वरभेदार्थः।

**उदा०**—(1) उदरम् (= उदर, गड्ढा, तालाब)—उद् दृणाति येनाऽन्नम्। दॄ विदारणे। उद् दॄ अल् (या अच्)—उद् दर् अ—'सार्वधातुकार्धधातु०' (पा० 7.3.84) से गुण प्राप्त, 'उरण् रपरः' से रपरत्व—उद् दर् अ—उद् के अन्त्य वर्ण (द्) का लोप, सु।

## (703) डित् खनेर्मुट् चोदात्तः [5.20]

**पद०**—डित् 1.1, खनेः 5.1, मुट् 1.1, च—अव्य०, उदात्तः 1.1

**अनु०**— 'उदि दृणातेरलचौ०' (उ०सू० 5.19) से 'अजलौ' का अनुवर्त्तन है। खन्धातोर् अच्-अलौ प्रत्ययौ भवतस् तौ च डित्सञ्ज्ञकौ। धातोश्च 'मुट्' इत्यागमः स्यात्, स चोदात्तः।

**व्याख्या**—वचनविपरिणाम से 'डित्' को द्विवचनान्त (यथा—डितौ) बनाकर इसका 'अलचौ' के साथ अन्वय किया जाता है। अर्थ—खन् धातु से परे अल् और अच् प्रत्यय होते हैं, जो डित्सञ्ज्ञक हैं तथा धातु को 'मुट्' आगम होता है और वह उदात्त होता है। 'मुट्' का टकार इत्सञ्ज्ञक है। 'मु' शेष रहता है। 'आद्यन्तौ टकितौ' से 'मुट्' धातु का आद्यवयव बनता है। प्रत्यय को डित् टिलोप के लिए किया है। 'अर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते'—इस परिभाषा से खन् को उदात्तस्वर का कथन होने से 'मुट्' के उकार को उदात्त स्वर होता है। श्वेतवनवासी लिखते हैं कि मुट् को उदात्त स्वर होता है। उदात्तविधान सामर्थ्य से मकारस्थ उकार की इत्सञ्ज्ञा नहीं होती है। दशपादीवृत्ति में पूर्वशास्त्र से 'अजलौ' का अनुवर्त्तन न करके डस्/ डन्/ डच् (भिन्न-भिन्न संस्करणों में) प्रत्ययों का विधान किया है। द्रष्टव्य—द०वृ० 3.51

**स्वा०द०वृ०**—खनेरलचौ। तयोर्डित्त्वं धातोर्मुडागमश्च। तस्योदात्तत्वम्। खनत्यन्नादिकमनेनेति **मुखम्** आस्यम्; मुखे भवो **'मुख्यः'** रोगः, **शरीरावयवाद्यत्** [ अ० 5.1.6 ]। मुखमिवोत्तमं **मुख्यम्, शाखादित्वात्** [ द्रष्टव्य—अ० 5.3.103 ] इवार्थे यत्।

**उदा०**—(1) मुखम् (= मुख)—खनत्यन्नादिकम् अनेन। खनु अवदारणे। खन् अल् (या अच्)—मुट् खन् अल् (या अच्)—अनुबन्धलोप। मुखन् अ—धातु की टि का—लोप—मुख् अ सु—अतोऽम्। मुखम्—उदात्त, शेष सर्वाऽनुदात्त। मुखम्—'उदात्तादनुदात्त०' (पा० 8.4.65) से अनुदात्त को स्वरित आदेश।

(2) मुख्यः (= मुख में होने वाला)—'मुखे भवः' इस अर्थ में 'तत्र भवः' (पा० 4.3.53) के अधिकार में 'शरीराऽवयवाद् यत्' (पा० 5.1.6) से 'यत्' प्रत्यय। मुख यत्—'यचि भम्' (पा० 1.4.18) से भसञ्ज्ञा। 'यस्येति च' (पा० 6.4.148) से

